# भुवमानीता भगवद्भाषा

विश्वासः

संस्कृतभारती

बेङ्गलूरु

प्रकाशनम् -
संस्कृतभारती
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ८५



प्रथममुद्रणम् - २००४, ५०००

मुखपुटकला - सुधाकर दर्बे

मूल्यं - रू. ३०.००

मुद्रणम् -
वागर्थ
न.रा. कालोनी, बेङ्गलूरु - १९

ISBN 81-88220-47-7

BHUVAMAANEETAA BHAGAVADBHAASHAA - A narrative on the revival of Hebrew, written by Dr. H.R. Vishwasa. Publisher - SAMSKRITA BHARATI 'Aksharam', 8th Cross, 2nd Phase, Girinagar, Bangalore - 560 085.

Pages - iv + 168 Price - Rs. 30-00 First print - Sept - 2004
Printed at - Vagartha, N.R.Colony, Bangalore - 560 019

# पूर्वभाष्यम्

संस्कृतसम्भाषण-आन्दोलनस्य आरम्भदिनानि तानि । 'इच्छाशक्तौ प्रबलायां सत्यां बहुकालात् व्यवहारपथात् दूरं गता अपि काचित् भाषा पुनः व्यवहारपथम् आनेतुं शक्या । अत्र निदर्शनं हीब्रूभाषा । आ द्विसहस्रवर्षेभ्यः व्यवहारात् च्युतां तां भाषाम् इस्रेल्देशीयाः यहूद्याः पुनः व्यवहारभाषां कृतवन्तः' इति कदाचित् कस्यचित् वरिष्ठस्य मुखात् मया श्रुतम् । तदनन्तरकाले ज्येष्ठानां कार्यकर्तॄणां मुखात् असकृत् सः विषयः श्रुतः । कासुचित् पत्रिकासु प्रकाशिताः तद्विषयकाः केचन लेखाः अपि पठिताः ।

पुनः कदाचित् संस्कृतभारत्याः अखिलभारतीयसङ्घटनमन्त्रिणः श्रीमतः चमू कृष्णशास्त्रिणः मुखतः हीब्रूपुनरुज्जीवनाभियानस्य नेतुः बेन्यहूदस्य प्रेरणादायकं जीवनचरित्रम् अपि श्रुतम् । तेषु एव दिनेषु 'Tongue of the Prophets'नामकं पुस्तकमपि पठितम्, यत्र बेन्यहूदस्य जीवितकार्यं निरूपितम् अस्ति । तदाधारेण केषुचित् वर्गेषु कार्यकर्तॄणां प्रेरणायै प्रवचनानि अपि कृतानि । अस्य कथानकस्य संस्कृतेन अनुवादः कृतः चेत् सः बहूनां लाभाय भवेत् इति अनन्तरकाले विचारः कृतः । 'यथास्थितम् अनुवादापेक्षया विविधमूलेभ्यः विषयसंग्रहणं कृत्वा स्वतन्त्रतया लेखनं वरम्' इति स्मारयता चमू कृष्णशास्त्रिणा तद्विषयकाणि अन्यानि अपि कानिचित् पुस्तकानि प्रदत्तानि । तेषाम् अध्ययनेन हीब्रूपुनरुज्जीवनाभियानस्य चित्रं किञ्चित् मनसि स्फुटम् अभवत् । तदाधारेण स्वतन्त्रतया एव लिखितम्

अस्ति एतत् कथानकं 'भुवमानीता भगवद्भाषा'नामकम् ।

'सम्भाषणसन्देश'मासपत्रिकायां पञ्चविंशत्याम् अङ्केषु धारावाहिनी-रूपेण कथानकम् इदं प्रकाशितम् अभवत् । तेषु दिनेषु प्रत्यङ्कं प्राप्ताः प्रतिस्पन्दाः असंख्याः । चेन्नैनगरस्य कश्चन पाठकबन्धुः षोडशपृष्ठात्मकं कञ्चित् लेखमेव प्रेषितवान् आसीत् प्रतिस्पन्दरूपेण !

'कथानकमिदं पुस्तकाकारं प्राप्नोतु' इति बहुभिः अनुरोधः क्रियमाणः एव असीत् आ बहोः कालात् । तस्य फलस्वरूपेण अधुना सज्जीकृतम् अस्ति पुस्तकम् एतत् । अस्य कथानकस्य लेखने, परिष्कारे, धारावाहिनी-रूपेण प्रकाशने, अधुना पुस्तकरूपेण प्रकाशने च ये ये सहकृतवन्तः ते सर्वेऽपि कृतज्ञतापूर्वकं स्मर्यन्ते ।

– लेखकः

तारणसं।।भाद्रपदपूर्णिमा
२८.९.२००४

# पठनस्य आरम्भात् पूर्वम् ....

लेबनान्, सिरिया, जार्डन्, ईजिप्ट् इत्यादिभिः देशैः मेडिटरेनियन्समुद्रेण च परिवृतः आकारेण अत्यन्तं लघुः देशः इस्त्रेल् । यहूद्याः अत्रत्याः मूलनिवासिनः । क्रि. पू. १०००-९०० कालावधौ केचन राजानः साम्राज्यरूपेण इस्त्रेल्देशं प्रतिष्ठापयितुं प्रयत्नम् अकुर्वन् । तत्र विशिष्य डेविड्नामकः महाराजः जेरूसलेंनगरं राजधानीं कृत्वा इस्त्रेल्देशे यहूद्यसाम्राज्यं स्थापयामास । तेषु दिनेषु यहूद्यसंस्कृतिः विशेषतया विकसिता अभूत् । परं तत्पश्चात् अस्सीरियनीयाः, ब्याबिलोनियाः, पर्षियनीयाः, ग्रीक्जनाः, रोमन्जनाश्चेति बहवः एतं देशम् आक्रम्य शासनम् अकुर्वन् । अन्ते च तुर्किसाम्रज्ये सः विलीनः आसीत् । एवम् पराक्रान्तां मातृभूमिं परित्यज्य यहूद्याः जगतः अन्यान् देशान् गत्वा तत्र आश्रयं प्राप्तवन्तः । तत्रैव जनैः समरसतां प्राप्य, तत्रत्यया भाषया एव वदन्तः तत्रैव वाणिज्यादिकं कुर्वन्तः जीविकाम् अकुर्वन् । परं सर्वेषाम् अपि अन्तरङ्गे मातृभूम्याः विषये श्रद्धा आसीदेव ।

यहूद्यसंस्कृतिः यदा पूर्णरूपेण विकसिता आसीत् तदा इस्त्रेल्देशे हीब्रू एव व्यवहारभाषा आसीत् । क्रैस्तानां पवित्रग्रन्थस्य बैबल्-नामकस्य पूर्वार्धस्य अधिकाः भागाः हीब्रूभाषया एव लिखिताः । यहूद्यानां सर्वेऽपि धार्मिकविधयः हीब्रूभाषया एव निरूह्यन्ते स्म तदा । परं गच्छता कालेन यदा यहूद्याः इतरान् देशान् गतवन्तः तदा तु हीब्रूभाषा धार्मिकविधिषु केवलं शिष्टा अभवत् । ततश्च यहूद्यानां मनसि तादृशः कश्चन भावः उत्पन्नः यत् हीब्रूभाषा तन्निमित्तमेव उपयोक्तव्या, न तु अन्यत्र इति । 'नित्यव्यवहारे पवित्रायाः हीब्रूभाषायाः उपयोगः ,पापाय' इति धारणा तेषां समाजे रूढा अभवत् । अतः सार्वजनिकस्थाने यदि कश्चित् हीब्रूभाषया वदति तर्हि सः अपराधित्वेन

परिगण्यते स्म । देवानां भाषया तया व्यवहर्तुं मनुष्याणाम् अस्माकं नास्ति अधिकारः इति तेषां दृढः निर्णयः आसीत् ।

परं यहूद्यसंस्कृतेः पुनरुत्थानकांक्षिभिः कैश्चित् चिन्तितं यत् व्यावहारिक-भाषारूपेण हीब्रूभाषायाः पुनरुज्जीवनेन एव सा साधयितुं शक्या इति । तेषु अग्रगण्यः आसीत् एलिसर् बेन्यहूदः । सः एतद्विषये बहून् स्वप्नान् अपश्यत् । तान् साकारीकर्तुं स्वीयं जीवनमेव पणीकृत्य कार्यम् अकरोत् च । तस्य साहसगाथा एव एषा 'भुवमानीता भगवद्भाषा ।'

हीब्रूभाषायाः संस्कृतभाषायाः च पुनरुत्थानपथे समानांशाः बहवः सन्ति । सावधानतया कथानकस्य अस्य अवलोकनेन ते अंशाः स्फुटाः भवन्ति । तयापि दृष्ट्या पठ्यताम् एतत् कथानकम् ।

* * *

# १. 'राबिन् सन् क्रूसी !'

"डिङ्ग् डाङ्ग्, डिङ्ग् डाङ्ग्..... !"

प्रार्थनामन्दिरस्य सा महती घण्टा निनादम् अकरोत् । तन्मध्ये जनानां पादचारस्य शब्दः । पुनरपि घण्टायां वादितायां सः बालः शनैः शनैः नेत्रे उन्मीलितवान् । पुरतः उपस्थितान् दशाधिकान् प्रौढान् जनान् दृष्टवतः तस्य मुखं स्वयमेव सङ्कुचितम् अभवत् । तावता तेषु केचन समीपम् आगताः एव ।

"को भवान् ? कुतः आगतः ?" – तेषु कश्चित् पृष्टवान् ।

'कोऽहम् ? कुतः आगतः ?' – आत्मानम् उद्दिश्य मनसि एव सोऽपि बालः प्रश्नम् अकरोत् । तस्य मनः पूर्वतनस्य स्मरणम् अकरोत् ।

* * *

रूस्देशे लिथुवेनियाप्रदेशस्य लुझ्कीनगरे लीबूपर्लमन्परिवारे १३ वर्षेभ्यः पूर्वम् एलिसर्नामकस्य तस्य जन्म अभवत् । तेषु दिनेषु रूस्देशे झार्-चक्रवर्तिनः तादृशं शासनम् आसीत् यत् प्रतिपरिवारं प्रथमं विहाय अन्यैः सर्वैः अपि पुमपत्यैः अग्रे सैन्यं प्रविश्य सेवा करणीया आसीत् । अतः अस्य बालस्य चतुरः पिता उपायं कृत्वा सर्वकारीयपत्रेषु कुत्रापि एतस्य पुत्रस्य जन्मनः उल्लेखमेव न कृतवान् आसीत् । अतः एव पर्लमन्-नामकम् उपनाम विहाय अन्यदीयस्य परिवारस्य एलिनाफ-उपनाम प्राप्तम् आसीत् एलिसरेण ।

स्वपित्रोः पञ्चसु अपत्येषु अन्यतमः एलिसरः आरम्भादपि पुस्तकप्रियः । तदीयां पुस्तकप्रियतां मत्वा तस्य विद्यालयशिक्षकः कदाचित् तन्मातरम् उक्तवान् आसीत् – "एतस्य बुद्धिः नितरां तीक्ष्णा अस्ति । यदि सम्यक् अध्ययनं करिष्यति तर्हि भाविनि काले अयम् असाधारणः भविष्यति" इति ।

परं शिक्षकस्य वचनेन निर्विण्णा एलिसरस्य माता फेगा । यतः स्वस्य परिवारस्य निर्धनता तया ज्ञाता एव । पतिः अपि तद्विषये निरासक्तः । एवं

चेत् चतुरस्य अस्य पुत्रस्य शिक्षणं कथं भवेत्... ! तदा तया स्वभ्राता स्मृतः । समीपे एव निवसन् डेविड् वूल्फसन्-नामकः सः धनिकः धार्मिकश्च । फेगायाः प्रार्थनाम् अङ्गीकृत्य सः एलिसरस्य शिक्षणं व्यवस्थापयितुं तं स्वगृहं नीतवान् । तत्र एलिसरस्य धार्मिकशिक्षणं व्यवस्थापितवान् च ।

ततः अल्पेन एव कालेन एलिसरस्य पिता दिवङ्गतः । माता च अन्येन परिणीता । परं तस्याः सः परिणयः विच्छेदे समाप्तिं गतः । पुनरपि सा अन्येन परिणीता । सोऽपि परिणयः विच्छेदे एव समाप्तिं गतः । तृतीयः अपि !

वर्षं यावत् एलिसरः मातुलस्य गृहे सुखेन न्यवसत् । त्रयोदशे वर्षे प्राप्ते तस्य बार्-मिटझ्वं-संस्कारः (उपनयनसंस्कारसदृशः) सम्पन्नः । तदा मातुलः तम् उक्तवान् - "वत्स ! प्रगताध्ययनाय भवता पोलोट्स्क्नगरं गन्तव्यम् । इतःपरं मम साहाय्यस्य निरीक्षां न करोतु । स्वप्रयत्नेन एव भवान् ज्ञानं सम्पादयतु" इति ।

नान्यः मार्गः आसीत् एलिसरस्य मातुलवचनस्य अङ्गीकारात् ऋते । सः परेद्यवि एव पोलाट्स्क्नगरं प्राप्तवान् । तत्र कस्याञ्चित् धर्मशालायां निवसन् कञ्चित् विद्यालयं प्रविष्टवान् । धार्मिकशिक्षणमेव प्रचलति स्म तत्र ।

विद्यालये प्राप्तः नूतनः सुहृत् डेविडः एलिसरं कदाचित् जोसेफ् ब्लूकरस्य गृहं नीतवान् । ब्लूकरः यहूद्यधर्मगुरुः । परम् आधुनिकदृष्टिमान् अध्ययन-शीलश्च । विशालः ग्रन्थालयः आसीत् तस्य । तदीयेन व्यक्तित्वेन नितरां प्रभावितः एलिसरः तस्य शिष्यत्वं स्वीकृतवान् ।

ब्लूकरस्य हीब्रूभाषायां महती प्रीतिः । सः तां भाषां न केवलं धार्मिकविधिषु उपयोगिनीं मन्यते स्म, अपि तु नित्यव्यवहारेऽपि ताम् उपयोक्तुम् इच्छति स्म । परन्तु जनाः तद् अपराधं मन्यते स्म तदा । ब्लूकरः एलिसरं हीब्रूभाषां पाठयितुम् आरब्धवान् । कैश्चिदेव दिनैः एलिसरः हीब्रूभाषां पठितुं शक्तः अभवत् ।

एकदा स्वहस्ताक्षरैः लिखितम् एकं पुस्तकम् एलिसराय यच्छन् ब्लूकरः उक्तवान् - "रहसि पठतु एतत् !"

एलिसरः पुस्तकस्य नाम पठितवान् । तत् आसीत् - 'राबिन् सन् क्रूसो ।'

हीब्रूभाषया लिखितं तत् शिरोनाम पठितवतः एलिसरस्य आनन्दस्य पारः एव नासीत् । 'पूजामात्रोपयोगिन्यां भाषायां नाविकस्य साहसयात्रां वर्णयन्ती कथा ! किं सा भाषा एतदर्थमपि उपयोक्तुं शक्यते... ?' तद्दिने एलिसरः न जानाति स्म यत् तदेव पुस्तकं स्वस्य जीवने महतः परिवर्तनस्य कारणं भविष्यति इति ।

पोलोट्स्क्नगरे एलिसरस्य वासः आसीत् कस्मिंश्चित् प्रार्थनामन्दिरे । धार्मिकशिक्षणं प्राप्यते इत्यतः तत्र तेन निश्शुल्का वासव्यवस्था प्राप्ता आसीत् । ब्लूकरस्य गृहतः स्वनिवासम् आगतः एलिसरः प्रथमं तच्च पुस्तकम् अन्येषां दृष्टिपथं यथा न प्रविशेत् तथा सुरक्षितं स्थापितवान् । यदा कोऽपि न पश्यति इति विश्वासः जातः तदा एकान्ते उपविश्य अतिप्रियस्य मधुरस्य इव तस्य पुस्तकस्य एकैकस्य अध्यायस्य आस्वादनं कृतवान् ।

गतानि कतिचित् दिनानि । कदाचित् हीब्रूभाषया लिखितां 'राबिन् सन् क्रूसो'कथां पठति अयं बालः इत्येषा वार्ता कथमपि ज्ञाता तस्य प्रार्थनामन्दिरस्य व्यवस्थापकैः । तद्दिने रात्रौ भोजनं न प्राप्तम् एलिसरेण, अस्य घोरस्य अपराधस्य दण्डनरूपेण ! परं तस्यामपि रात्रौ तस्य पुस्तकस्य पठनचापलं निग्रहीतुम् अशक्तः एलिसरः एकान्ते तद् पुस्तकं पठन् एव निद्रां गतः ।

तन्मध्ये कस्यचित् आगमनस्य पादशब्दं श्रुत्वा जागरितः सः । झटिति तद् पुस्तकं स्वशय्यायाः अधः निगूह्य स्वयं निद्रामग्नः इव अभिनीतवान् । द्वारं नुदन् अन्तः प्रविष्टवान् तस्य मातुलः । सूक्ष्मेक्षिकया परिशीलयता तेन भागिनेयस्य कपटनिद्रा ज्ञाता । तन्मध्ये शय्यायाः अधः निगूहितं तत् पुस्तकमपि तेन प्राप्तम् । तद् गृहीत्वा सिक्थवर्तिकायाः प्रकाशे तस्य पुस्तकस्य नाम उच्चैः पठितवान् सः - 'राबिन् सन् क्रूसो ।'

ततः गर्जितवान् सः - ''मया यत् श्रुतं तत् सत्यमेव इति ज्ञातम् । धार्मिकशिक्षणे नियुक्तः भवान् अधार्मिककार्यं कुर्वन् अस्ति । पवित्रया भाषया लिखितम् अपवित्रं कथानकं पठति ! देवभाषाम् अपवित्रां कृतवतः

भवतः इतःपरं नास्ति मम आश्रयः । उत्तिष्ठतु । भवदीयानि वस्तूनि गृहीत्वा इदानीमेव निर्गच्छतु इतः...।''

निरुपायः सन् एलिसरः स्वीयं वस्त्रद्वयं गृहीत्वा ततः प्रस्थितः । परं कुत्र गन्तव्यम् ? कदाचित् तेन श्रुतम् आसीत् यत् समीपे ग्लुबोकियानामकं नगरम् अस्ति इति । तदभिमुखं चलितवान् सः । रात्रौ भोजनमपि न कृतम् आसीत् तेन । अतः पादयोः शक्तिरेव नष्टा आसीत् । तथापि कथमपि सः मन्दं मन्दं चलितवान् । मध्यरात्रसमये ग्लुबोकियानगरं प्राप्तवान् च ।

तस्मिन् नगरे न कोऽपि परिचितः आसीत् तस्य । किन्तु सः जानाति स्म यत् प्रार्थनामन्दिराणां द्वारं तु चतुर्विंशतिघण्टाः अपि उद्घाटितमेव भवति इति । अतः सः किञ्चन प्रार्थनामन्दिरं प्राप्य अन्तः प्रविष्टवान् । तत्र दीपस्य मन्दः प्रकाशः प्रसृतः आसीत् । अन्तः प्रविश्य एकस्य पीठस्य उपरि सशब्दं न्यपतत् सः । झटिति एव गाढं निद्रितवान् च ।

* * *

''को भवान् ? कुतः आगतः... ?'' – जागरितं तं बालं पृष्टवन्तः प्रातःकाले प्रार्थनार्थं तत्र सम्मिलिताः नागरिकाः । एलिसरः रुदन् एव स्वीयां कथां संक्षेपेण उक्तवान् । तत्र उपस्थितेषु कश्चन उन्नतः, मध्यवयस्कः पुरुषः विशेषतया एलिसरस्य मनः आकर्षत् । सर्वं श्रुत्वा सः पुरुषः एलिसरम् उक्तवान् – ''अहमस्मि श्लोमो योनसः । मदीयः परिवारः बृहत् अस्ति । यदि भवान् अङ्गीकरोति तर्हि मम परिवारसदस्येषु भवानपि अन्यतमः भवितुम् अर्हति.....।''

एलिसरः सम्मतिसूचकं शिरः चालितवान् । तम् अनुसृतवान् च ।

योनसः ग्लुबोकियानगरस्य प्रतिष्ठितेषु नागरिकेषु अन्यतमः । धनिकोऽपि । तदीयः मद्यनिर्माणव्यवसायः आसीत् । उद्यानोपेतं विशालं गृहम् आसीत् तस्य । योनसस्य गृहे एकस्मिन् विशाले प्रकोष्ठे व्यवस्थापितं ग्रन्थालयं दृष्ट्वा नितरां विस्मितः एलिसरः । शताधिकानि पुस्तकानि कपाटिकासु सुव्यवस्थितं स्थापितानि आसन् तत्र । एकैकामपि कपाटिकां कुतूहलेन उद्घाट्य दृष्टवतः एलिसरस्य मुखं विच्छायम् अभवत् । तद् दृष्ट्वा योनसः

अपृच्छत् – "वत्स ! किं सञ्जातम् ...?"

"एतानि पुस्तकानि कया भाषया लिखितानि ? न यिड्डिष्भाषया, न वा हीब्रूभाषया । मया ज्ञाते भाषे तु एते द्वे एव । ..."

"जर्मन्-फ्रेञ्च्-रूस्-भाषाभिः लिखितानि पुस्तकानि सन्ति अत्र । यदि भवान् इच्छति तर्हि ताः भाषाः अपि शिक्षितुं प्रभवति एव...." – योनसः अवदत् ।

योनसस्य पत्नी अपि सः इव सहृदया एव । तयोः चतस्रः पुत्र्यः, द्वौ पुत्रौ । अल्पाहारसमये ज्येष्ठपुत्र्याः डेबोरायाः परिचयः प्राप्तः एलिसरेण । अष्टादशवर्षीया सा एलिसरस्य सर्वामपि कथां श्रुत्वा उक्तवती – "यदि भवान् इच्छति तर्हि अहं भवन्तं ताः भाषाः शिक्षयामि ।"

एलिसरः सन्तोषेण अङ्गीकृतवान् । "तर्हि कुतो विलम्बः ? शुभस्य शीघ्रम् । इदानीमेव शिक्षणस्य आरम्भः भवतु" – इति वदन्ती डेबोरा तं ग्रन्थालयं नीतवती । योनसस्य कनिष्ठा पुत्री पोला तदानीमपि एलिसरं विस्मयेन पश्यन्ती आसीत् ।

डेबोरा निस्संशयम् उत्तमा भाषाशिक्षिका । सा एलिसरम् अतीव प्रीत्या जर्मन्-फ्रेञ्च्-रूस्-भाषाः पाठितवती । शनैः एकैकं पदमपि उच्चार्य, उच्चारणप्रकारं प्रदर्श्य, तन्मुखात् वाचयित्वा, तस्य अर्थविवरणं कृत्वा पाठयन्त्याः तस्याः निरीक्षां व्यर्थां न कृतवान् एलिसरः । अविरतेन अभ्यासेन दिने दिने प्रगतिं साधयन् सः तां समतोषयत् ।

योनसः पादचारेण वायुविहारार्थं गमनसमये मध्ये मध्ये एलिसरमपि नयति स्म । एवं कदाचित् गमनावसरे सः एलिसरम् उक्तवान् – "वत्स ! भाषाशिक्षणे भवान् अतीव कुशलः इति श्रुतं मया । महान् मे सन्तोषः । ताः सर्वाः भाषाः सम्यक् जानातु । परन्तु वत्स ! कदापि भवान् हीब्रूभाषां मा विस्मरतु । अहो, कीदृशी सुमधुरा भाषा सा ! परन्तु सा अद्य प्रार्थनायै केवलम् उपयुज्यते । पवित्रस्य यहूद्यसाहित्यस्य रक्षणमात्रं तया भाषया क्रियते । परन्तु अहं वाञ्छामि यत् हीब्रूभाषा पुनरपि भाषितभाषा भवेत्, नित्यव्यवहारस्य भाषा भवेत् इति । भवान् प्रतिशृणोतु यत् स्वजीवने कदापि हीब्रूभाषां न विस्मरामि इति !"

एलिसरः तथैव प्रतिश्रुतवान् ।

* * *

वर्षद्वयं यावत् एलिसरेण डेबोरायाः शिष्यत्वम् आचरितम् । तदभ्यन्तरे सः जर्मन्, फ्रेञ्च्, रूस् चेति तासु तिसृषु भाषासु गुरोः समानां परिणतिं प्राप्तवान् । अतीते वर्षद्वये एलिसरस्य अध्ययनासक्तिं परिश्रमं च परिगणय्य योनसः चिन्तितवान् यत् उचिते अवसरे लब्धे सति अयं बालः महापुरुषः भविष्यति । अतः एतस्य प्रगताध्ययनस्य व्यवस्था करणीया । तदर्थं ड्यूनबर्गनगरं गत्वा तत्र अध्ययनम् अनुवर्तयतु एषः इति ।

एलिसरस्य ड्यूनबर्गगमनं निश्चितम् । तद्दिनमपि सन्निहितम् । तस्मिन्नपि दिने डेबोरा प्रतिदिनमिव तं पाठितवती । पाठसमाप्तिसमये सा विषण्णमनस्का आसीत् । एलिसरस्यापि तादृशी एव स्थितिः । तथापि सः अवदत् – "डेबोरे ! भवत्याः पाठनादेव अद्य अहं किमपि वाक्यं पञ्चभिः भाषाभिः वक्तुं शक्नोमि...।"

"आम् । जानामि अहम् । परन्तु इतः प्रस्थानसमयेऽस्मिंन् भवान् मां एतदतिरिच्य विशिष्टं किमपि वक्तुम् इच्छेत् खलु ...?"

"सत्यं डेबोरे ! इतः गमने मम एका एव चिन्ता यत् कथमहं भवत्या विरहितः सन् जीवामि इति..।"

"तन्नाम...., भवानपि मां कामयते । हन्त ! अन्ततो गत्वा वा शब्दैः उक्तं खलु तत् भवता । प्रिय एलिसर् ! कृपया मां प्रतिशृणोतु यत् 'यत्र कुत्रापि भवेयं, भवतीं स्मरामि इति....।"

"निश्चयेन तथा प्रतिशृणोमि..." – एलिसरः उवाच यिड्डिष्भाषया ।

"नैव मित्र ! एतां प्रतिश्रुतिं हीब्रूभाषया एव श्रोतुम् इच्छामि अहम् । तया पवित्रया भाषया एषः पवित्रः जीवनशपथः आवाभ्यां स्वीकरणीयः । तदा एव मम तृप्तिः....।"

यावत् एलिसरः हीब्रूभाषया तत् उच्चारितवान् तावत् अन्तः प्रविष्टा डेबोरायाः माता उक्तवती – "वत्स ! त्वर्यताम् । भवता गमनात्पूर्वं भोजनं करणीयमस्ति ।"

भोजनानन्तरं डेबोरा स्वेनैव अतीव प्रीत्या निर्मिताम् ऊर्णिकामेकाम्

आनीय एलिसरस्य कण्ठे स्थापयन्ती उक्तवती - "शीतात् भवन्तं रक्षतु एषा । एवमेव यदा यदा एतां पश्यति तदा तदा मां स्मरेत् एव भवान् ।"

एलिसरः तैः आपृष्टः सन् ड्यूनबर्गं गतः ।

* * *

ड्यूनबर्गनगरे भाटकार्थं कश्चित् प्रकोष्ठं प्राप्य तत्र निवसन् एलिसरः उच्चतरमाध्यमिकविद्यालये शिक्षणम् अनुवर्तितवान् । काचित् छात्रवृत्तिः अपि तेन प्राप्ता, येन शिक्षणाय अपेक्षितानि पुस्तकानि क्रेतुं शक्तः अभवत् सः । ड्यूनबर्गनगरे बहवः यहूद्याः आसन् । तेषां सम्पर्कः सहवासश्च एलिसरस्य ज्ञानक्षितिजस्य विस्तारम् अकुरुताम् । विशेषतया विट्नस्कि-नामकः युवा पुनः पुनः एलिसरेण सह चिन्तनं चर्चां च कुर्वन् तस्य चिन्तनशक्तिं विस्तारितवान् ।

एलिसरः चिन्तितवान् - 'इस्रेल्देशस्य मूलनिवासिनः यहूद्याः वयम् एवम् अनेकेषु देशेषु निवसन्तः विकीर्णाः स्मः । अस्मदीयः देशः इदानीं परतन्त्रः अस्ति । अस्मदीया भाषा हीब्रूभाषा व्यवहारात् दूरं गता अस्ति । अतः एव अस्मदीया यहूद्यसंस्कृतिः नष्टप्राया अस्ति । सर्वैः अस्माभिः यहूद्यैः सङ्घटितैः भवितव्यम् । स्वदेशः स्वतन्त्रः करणीयः । बल्गेरियादेशीयैः यथा इदानीं स्वतन्त्रता प्राप्ता अस्ति तथा अस्माभिरपि स्वतन्त्रता प्राप्तव्या । तत्र स्वभाषा पुनः व्यवहारे प्रतिष्ठापयितव्या, येन अस्माकं संस्कृतिः रक्षिता भवेत् । मम जीवने इतोऽपि महत्तरं कार्यं नान्यत् किमपि भवितुम् अर्हति' इति ।

ड्यूनबर्गनगरे एलिसरस्य जीवनलक्ष्यं स्पष्टम् अभवत् । तेन निर्णीतं यत् तदर्थं मया जीवनीयम् इति । तस्य सन्नाहं कर्तुं प्यारिस्नगरमेव उचितम् इति सः अचिन्तयत् । यतः तत् नगरम् आसीत् बुद्धिमतां बुद्धिजीविनां च केन्द्रम् । तत्र स्थित्वा वैद्यकीयशिक्षणमपि प्राप्तव्यं, यच्च भाविनि काले स्वस्य योग्यं जीवनाधारं सामाजिकस्थानमानं च कल्पयितुम् अर्हति इति तेन निर्णयः कृतः ।

* * *

# २. महत्त्वपूर्णः कश्चन प्रश्नः

मोहके प्यारिस्पत्तने वैद्यकीयमहाविद्यालयप्रवेशः तत्र अध्ययनं च एलिसरस्य नाममात्रमेव आसीत् । स तु नित्यं तन्नगरे निवसतां, कारणान्तरैः तत्र आगत्य मिलतां बुद्धिजीविनां, पत्रकाराणां नीतिनिर्मातॄणां च महाजनानां दर्शने, तेषां परिचयप्राप्तौ, तैः सह इस्त्रेल्देशस्य हीब्रूभाषायाश्च नवोत्थानविषये स्वीयानां स्वप्नानां विनिमये च अधिकं कालम् अनयत् । जागतिकपरिवेषे जायमानानि सर्वविधानि परिवर्तनानि सः अत्यन्तं जागरूकतया परिशीलयति स्म । प्रतिदिनम् अत्यधिकं कालं वृत्तपत्राणां पठने नयति स्म । इतिहास-राजनीतिसम्बद्धान् बहून् ग्रन्थान् सः अपठत् । तदा तदा अविस्मृत्य डेबोरायै पत्राणि च लिखति स्म, यत्र सः स्वीयान् स्वप्नान् आकर्षकरूपेण निरूपयति स्म । कदाचित् तेन एवं लिखितम् – 'इस्त्रेल्देशस्य भाषा हीब्रू एव भवेत् । परन्तु सा न पण्डितभाषा, न वा ग्रन्थभाषा । अपि तु सामान्यैः अपि नित्यजीवने व्यवहर्तुं योग्या सरला भाषा । अहं जानामि यत् हीब्रूभाषायाः तथा व्यवहारपथं प्रति आनयनं न सुकरम् । तथापि यत्नः करणीयः एव । अहं तदर्थमेव जीविष्यामि ।'

तेषु एव दिनेषु एलिसरस्य अस्वास्थ्यं जातम् । पूर्वमपि तस्य कासः आसीदेव । सः इदानीं द्विगुणितः जातः । कदाचित् कासे रक्तमपि निस्सरति स्म । तेन वैद्यः परामृष्टः । परीक्षणं कृत्वा वैद्यः उक्तवान् – ''स्वास्थ्यविषये भवता अधिका जागरूकता वोढव्या । भवान् क्षयरोगपीडितः अस्ति । स्वास्थ्यरक्षणाय कञ्चित् कालं यावत् भवता प्यारिस्नगरं त्यक्त्वा अन्यत्र एव वासः करणीयः'' इति ।

एलिसरः निश्चितवान् यत् 'अहम् अल्पायुः अस्मि । मदीयानि दिनानि अल्पानि सन्ति । परन्तु करणीयानि कार्याणि सन्ति पर्वतोपमानि । अतः प्रतिक्षणमपि अमूल्यं मत्वा मया जीवितव्यम् ।'

* * *

तद्दिने एलिसरस्य मनसि महान् आनन्दः । कृतकृत्यता च । यतः तदा एव तेन कश्चन विशिष्टः लेखः समापितः आसीत् । तन्निमित्तं तेन सुदीर्घम् अध्ययनं कृतम् आसीत् । बहूनि प्रमाणानि च संगृहीतानि आसन् । यहूद्यानाम् इतिहासः, श्रेष्ठपरम्परा, इस्रेल्देशस्य स्वतन्त्रताप्राप्तेः आवश्यकता, हीब्रूभाषायाः पुनरुज्जीवनम् – इत्यादयः अंशाः तेन तत्र सम्यक् प्रतिपादिताः आसन् । यदि एषः लेखः पत्रिकायां प्रकाशितः भविष्यति, यहूद्याः एतं पठिष्यन्ति तर्हि महान् परिणामः भविष्यति इति तस्य दृढः विश्वासः आसीत् । 'हामागिड्'नामिकायै पत्रिकायै स्वलेखं प्रेषयित्वा ततः क्षणगणनाम् आरब्धवान् सः । निरीक्षायामेव उपविष्टाय तस्मै आहारः अपि न अरोचत । दिनद्वयानन्तरं प्रतिघण्टमिव स्वस्य भाटकप्रकोष्ठात् गृहस्वामिनः निवासम् आगत्य 'मम कृते किमपि पत्रम् आगतं किम् ?' इति विचारयति स्म सः । तदीयेन व्यवहारेण विस्मितः सः गृहस्वामी । ततः दिनद्वयानन्तरं तस्य नाम्ना पत्रमेकं प्राप्तम् । गृहस्वामिनः सकाशात् तत् आकृष्य इव गृहीत्वा स्वप्रकोष्ठं प्रति धावितवान् एलिसरः । परन्तु तच्च पत्रं पठितवतः तस्य शरीरं छिन्नः कदलीवृक्षः इव शय्यायां न्यपतत् । निराशतया सः मृतप्रायः इव जातः । तस्मिन् पत्रे तु एतावदेव लिखितम् आसीत् – 'सविषादम् इदं सूच्यते यत् भवदीयः लेखः प्रकाशनयोग्यः नास्ति' इति । तेन एलिसरस्य स्वप्नाः सर्वेऽपि धूलिसात्कृताः आसन् ।

परेद्यवि एलिसरं द्रष्टुम् आगतः तस्य मित्रं तहशनिकोवः प्रवृत्तं सर्वं ज्ञातवान् । एलिसरस्य हितेच्छुकेन तेन तस्मिन् पुनरपि उत्साहः पूरितः । ''मित्र ! सन्ति अन्याः अपि पत्रिकाः । भवदीयं महत्त्वपूर्णम् एतं लेखं काचित् पत्रिका प्रकाशयेत् एव । प्रयत्नं तु अवश्यं कुर्मः । ताभ्यः अपि लेखं प्रेषयिष्यामः'' इति तदीयं वचनं श्रुत्वा एलिसरः ततः अन्यस्यै पत्रिकायै लेखं प्रेषितवान् । पुनरपि आरब्धा क्षणगणना ।

वियेन्नानगरत् प्रकाश्यमानायाः हर्षहार्नामिकायाः तस्याः पत्रिकायाः प्राप्तम् उत्तरं यद्यपि अत्यन्तं संक्षिप्तम् आसीत् तथापि तत् एलिसरम् आनन्दसागरे न्यमज्जयत् । तत्र एवं लिखितम् आसीत् – 'भवदीयः लेखः

प्रकाशनाय अङ्गीकृतः अस्ति । परन्तु तस्य शिरोनाम परिवर्त्यते । 'ज्वलन्ती समस्या' इति स्थाने 'महत्त्वपूर्णः प्रश्नः' इति शिरोनाम्ना सः प्रकाशयिष्यते' इति ।

तत् पठितवतः एलिसरस्य आनन्दस्य पारः एव न आसीत् । तच्च पत्रं तस्य जीवने चैतन्यमेव प्रादात् । ततः केषाञ्चित् दिनानाम् अनन्तरं हर्षहार्-पत्रिकायाम् एलिसरस्य ऐतिहासिकः सः लेखः प्रकाशितः अभवत् । तत्र एलिसरेण अत्यन्तं स्पष्टशब्दैः एवं प्रतिपादितम् आसीत् –

जगतः सर्वेषु भागेषु विकीर्णानां यहूद्यानाम् अस्माकम् इस्रेल्देशं प्रतिनिवृत्य तत्र नूतनसाम्राज्यस्य निर्माणमेव यहूद्यसंस्कृतेः रक्षणस्य एकः एव उपायः । इस्रेल्देशस्य देवभूमौ वयं स्वतन्त्रतया जीविष्यामः । स्वकीयम् अन्नं स्वयमेव सम्पादयिष्यामः । अतः सर्वोऽपि यहूद्यः निर्णयं करोतु, स्वदेशं गच्छतु च । तत्र स्वशक्त्यनुसारं भूमिं क्रीणातु, कृषिकार्यस्य आरम्भं करोतु । एवं किञ्चित्किञ्चिदिव समग्रामपि तत्रत्यां भूमिं क्रीत्वा स्वकीयां कुर्मः । स्वतन्त्रे इस्रेल्देशे अस्मदीया प्राचीनसंस्कृतिः पुनः विकसिता भविष्यति ।

लेखस्य पार्श्वे लेखकस्य नाम प्रकाशितम् आसीत् 'बेन्यहूदः' इति ! तद् दृष्ट्वा विस्मयं प्रकटितवन्तं मित्रम् उक्तवान् एलिसरः – ''आम् । एतदेव मम उचितं नामधेयम् । एतत्तु पूर्णतः हीब्रूभाषीयमेव नाम । अस्य अर्थः 'यहूदस्य पुत्रः' इति । परमपितुः यहूदस्य पुत्रः अस्मि एव अहम् । अतः अन्वर्थमपि एतत् नाम'' इति ।

* * *

एलिसरस्य अस्वाथ्यं पुनरपि प्रवृद्धम् । तेन परामृष्टः वैद्यः अवदत् – ''पूर्वमपि मया सूचितमेव । भवता कञ्चित्कालं यावत् वा प्यारिस्नगरं त्यक्त्वा अल्जीर् गन्तव्यम् । तत्रत्यं वातावरणमेव भवतः स्वास्थ्यं वर्धयति । एतत्तु भवता शीघ्रातिशीघ्रं करणीयम् । अन्यथा अग्रे भवता पश्चात्तापः अनुभोक्तव्यः भविष्यति ।''

एलिसरस्य समीपे तथा विश्रान्तिनिमित्तं गमनाय धनं नासीत् । तथापि परिस्थितेः गाम्भीर्यं ज्ञात्वा तदीयानि मित्राणि तस्य साहाय्यम् अकुर्वन् ।

ततः धनं प्राप्य एलिसरः अनिच्छन् अपि अल्जीर् गतवान् ।

अल्जीर् प्रति एलिसरेण आगतं तु विश्रान्त्यर्थम् । तत्र सः अटनादिकं न्यूनीकृत्य अध्ययने एव मनः स्थिरीकृतवान् । गम्भीरेण अध्ययेन तस्य चिन्तनं प्रवृद्धम् । वैचारिकम् अधिष्ठानं स्पष्टतरं जातम् । सः अचिन्तयत् – 'विश्वस्य नानाभागेषु निवसन्तः यहूद्याः वयम् इदानीं स्वीयां भाषां विस्मृतवन्तः एव । एकस्मिन् कालखण्डे तु हीब्रूभाषा अस्माकं व्यवहारभाषा आसीत् । इदानीं वयं तत्तद्देशभाषया व्यवहरन्तः स्मः । सप्तत्यधिकभाषासु व्यवहारं कुर्वतां यहूद्यानाम् अस्माकं सर्वसाधारणी भाषा तु कापि नास्ति । सा च नान्या भवितुम् अर्हति ऋते हीब्रूभाषायाः । हीब्रू यद्यपि सरला मधुरा, तथापि द्विसहस्रवर्षेभ्यः सा व्यवहारात् दूरं गता । पूजादिषु धार्मिकविधिषु केवलं सा उपयुज्यते । नित्यव्यवहारे तस्याः प्रयोगः शक्यः इत्येतदपि जनाः नाङ्गीकुर्वन्ति, न विश्वसन्ति अपि । अन्यच्च हीब्रूभाषायाम् आधुनिकाः व्यावहारिकाः शब्दाः न सन्ति । अतः प्राचीनवाङ्मयम् अधीत्य ततः शब्दाः प्राप्तव्याः । प्रतिदिनम् आविष्क्रियमाणानां नूतनानां वस्तूनां कृते तु हीब्रूभाषया नूतनाः शब्दाः एव स्रष्टव्याः । शब्दनिर्माणसामर्थ्यं तु हीब्रूभाषायाः अस्ति एव । अतः मया अन्वेषकेण भवितव्यम् । कोषकारेणापि भवितव्यम् ।'

* * *

एलिसरः यदा प्यारिस्नगरं प्रत्यागतवान् तावता तदीयः 'महत्त्वपूर्णः प्रश्नः' इति लेखः नितरां जनप्रियतां गतः आसीत् । अनेकासु पत्रिकासु सः नैकवारं मुद्रितः । अतः यहूद्यसमुदाये सः चर्चाविषयः जातः आसीत् । परन्तु एलिसरस्य अभिप्रायविषये बहूनां सम्मतिः न, प्रत्युत विरोधः एव आसीत् । विभिन्नेषु देशेषु निवसतां यहूद्यानाम् इस्रेल् प्रति गमनापेक्षया तत्तद्देशे तत्तद्देशीयैः सह सामञ्जस्येन जीवनमेव वरम् इत्यासीत् बहूनाम् आशयः ।

एलिसरः स्वस्य वादं द्रढयितुम् आशयं विवरीतुं च अन्यान् अपि बहून् लेखान् लिखित्वा प्रकाशितवान्, यस्य च कारणतः यहूद्यसमुदाये विचार-मन्थनमेव प्रारब्धम् ।

कदाचित् एलिसरः कैश्चित् उच्यमानं श्रुतवान् यत् ''केयं कपटता अस्य एलिसरस्य यत् सः इस्त्रेल्देशगमनाय अन्यान् यहूद्यान् अनुरुणद्धि । स्वयं च मोहके प्यारिस्नगरे स्थित्वा सुखम् अनुभवति'' इति ।

एतत् एलिसरं नितराम् अपीडयत् । आत्मावलोकनं कुर्वता तेन झटिति निर्णयः कृतः यत् – 'आम् । मया आदौ इस्त्रेल्देशः गन्तव्यः । सा एव मम कर्मभूमिः । तदेव मम कार्यक्षेत्रम् । तत्र निवसतां बन्धूनां मध्ये एव स्थित्वा मया कार्यं वर्धनीयम् । हीब्रूभाषा उज्जीवनीया ।'

ततः वैद्यकीयशिक्षणमपि अर्धे एव परित्यज्य सः एकस्मिन् दिने प्यालस्तीन्नगरं प्रति प्रस्थितः, नेत्रयोः नैकान् स्वप्नान् वहन् !

* * *

स्वपुत्रीं डेबोरां एलिसरः कामयते इत्येतत् योनसेन न अविदितम् आसीत् । तत्र तस्य विरोधः अपि नासीत् । यतः एलिसरः सत्पात्रम् इत्यत्र तस्य संशयः एव नासीत् । परन्तु सः वैद्यकीयशिक्षणं प्राप्नोतु, वैद्यरूपेण समाजे प्रतिष्ठितः भवतु, तत्पश्चात् डेबोरां परिणयतु इत्यासीत् तस्य विचारः । तन्मध्ये तेन वार्ता प्राप्ता यत् एलिसरः वैद्यकीयशिक्षणमपि मध्ये एव परित्यज्य प्यारिस्नगरतः इस्त्रेल्देशं गच्छति इति । एलिसरः एकस्मिन् पत्रे तम् इत्थं निवेदितवान् आसीत् – 'एषु दिनेषु मम स्वास्थ्यं हीयमानम् अस्ति । वैद्याः अभिप्रयन्ति यत् अहं बहुकालं न जीविष्यामि इति । अतः मम शिष्टस्य जीवनस्य सार्थकतां सम्पादयितुम् अहं स्वदेशं गमिष्यामि, झटिति एव । डेबोरा मदपेक्षया योग्यं पतिं प्राप्तुम् अर्हति इत्यत्र मम संशयः नास्ति । तथापि, यदि सा ईदृशस्थितौ अपि मम जीवनयात्रायां सहपथिका भवितुम् इच्छति तर्हि शीघ्रमेव वियेन्नानगरम् आगच्छतु । ततः आवां मिलित्वा एव इस्त्रेल् गमिष्यावः' इति ।

तस्य पत्रस्य पठनेन योनसस्य परिवारः दिङ्मूढः अभवत् । ततश्च डेबोरा घोषितवती – ''तात ! एलिसरस्य स्थितिः यादृशी अपि भवतु, सः यावन्ति अल्पानि दिनानि वा जीवतु नाम, सः एव मम पतिः । तमेव अहं परिणेष्यामि । एषः अन्तिमः निर्णयः मम । अतः झटिति वियेन्नानगरं प्रति मां प्रेषयितुं

व्यवस्थां करोतु'' इति ।

वियेन्ना आस्ट्रियादेशस्य राजधानी । तत्र गमनाय पारपत्रादीनाम् आवश्यकता आसीदेव । परन्तु इदानीं तत्सर्वं प्राप्तुं समयः न आसीत् । अतः गुप्तरूपेण एव कथमपि डेबोरा तत्र प्रापणीया इति योनसः स्वीयं भ्रातरम् असूचयत् ।

वियेन्नानगरे एलिसरस्य न कोऽपि परिचितः आसीत् ऋते हर्षहार्-पत्रिकायाः सम्पादकात् । सः एव एलिसरस्य प्रथमं लेखं प्रकाशितवान् आसीत् । तस्य तु दर्शनम् अवश्यं करणीयम् इति एलिसरः निश्चितवान् आसीत् । अतः वियेन्नानगरं प्राप्य कस्मिंश्चित् वसतिगृहे भाटकप्रकोष्ठं प्राप्य एलिसरः हर्षहार्पत्रिकायाः कार्यालयं गतवान् । सम्पादकः एलिसरं सहार्दं स्वागतीकृतवान् । सोऽपि इस्रेल्देशस्य स्वातन्त्र्यं पुनर्निर्माणं च इच्छति । अतः समानशीलयोः तयोः मध्ये झटिति आत्मीयता उत्पन्ना । ''भवतः लेखस्य प्रभावः इदानीं बहुत्र दृश्यते । अनेके यहूद्याः इस्रेल्गमन-विचारं कुर्वन्तः सन्ति...'' - सः उक्तवान् । ततः बहुकालं यावत् तौ तद्विषये एव वार्तालापम् अकुरुताम् । अग्रेऽपि तस्यै पत्रिकायै लेखान् लेखितुम् एलिसरं प्रार्थितवान् सः सम्पादकः ।

वियेन्नानगरे एलिसरस्य कार्यद्वयम् आसीत् । हर्षहार्सम्पादकस्य दर्शनं, डेबोरायाः निमित्तं कञ्चित् कालं यावत् प्रतीक्षाकरणं चेति । स्वीयम् अनारोग्यम्, आर्थिकी दुःस्थितिः, तन्मध्ये स्वीकृतं दुष्करं कार्यं चेति एतत्सर्वं यदा मनसि आकलयति तदा तु डेबोरायाः अत्र आगमनं कथमपि न सम्भवति इति सः चिन्तयति । परन्तु तस्य अन्तरङ्गे तु तस्याः आगमनविषये काचित् क्षीणा आशारेखा आसीदेव । अतः एव सः वियेन्नानगरे 'कस्मिन् वसतिगृहे निवसामि' इत्यपि योनसं सूचितवान् आसीत् । डेबोरायाः आगमनविषये तन्त्रीवार्ता आगता भवेत् इति निरीक्षया एव वसतिगृहं गतः सः तत्र निराशः जातः । ततश्च खिन्नमनस्को भूत्वा प्रकोष्ठे चिन्तामग्नः सन् उपाविशत् ।

घण्टात्मकः कालः अतीतः स्यात् । द्वारदेशे शब्दं श्रुत्वा गत्वा द्वारम् उद्घाटितवान् एलिसरः स्वीयनेत्रयोः विश्वसितुमेव न शक्तवान् । तत्र गृहीतपेटिका सती स्थिता आसीत् तदीया स्वप्नसुन्दरी डेबोरा ! द्वयोरपि नेत्रयोः आनन्दाश्रुप्रवाहः !

बहुकालं यावत् परस्परम् आलिङ्ग्य स्थितवन्तौ तौ । ततश्च घण्टां यावत् जर्मन्भाषया फ्रेञ्च्भाषया च कुशलसम्भाषणं कृतवन्तौ ।

अग्रिमाणि पञ्चषाणि दिनानि तौ परस्परं हस्तेन हस्तं गृहीत्वा वियेन्नानगरस्य सर्वासु वीथीषु अटितवन्तौ । न आसीत् इयत्ता तयोः उत्साहस्य उल्लासस्य वा । परन्तु तन्मध्ये ज्ञातं यत् वियेन्नानगरे तयोः विवाहः न शक्यः इति । यतः वियेन्नायां विवाहार्थं द्वयोरपि जननप्रमाणपत्रम् अन्यविधानि प्रमाणपत्राणि च अनिवार्यतया अपेक्षितानि आसन् । परन्तु तयोः समीपे तानि पत्राणि नासन् । शीघ्रं प्राप्तुमपि न शक्यानि आसन् । तदा कैश्चित् तौ सूचितौ यत् टर्किदेशः गतः चेत् तत्र एतादृशी समस्या न भविष्यति, सुखेन विवाहः भविष्यति इति । अतः तौ ततः कानुस्टान्टिनोपाल्नगरं गन्तुं निश्चितवन्तौ । अत्रान्तरे वार्ता प्राप्ता यत् एलिसरस्य प्यारिस्नगरीयः सुहृत् तहशनिकोवः अपि ताभ्यां सह इस्रेल्देशं प्रति गमनाय तत्र आगमिष्यति इति ।

तहशनिकोवस्य आगमनवार्ता एलिसरम् आनन्दतुन्दिलं यथा तथा डेबोरां व्यथितमानसाम् अकरोत् । यतः प्रेमिणोः विहारयात्रायां तृतीयस्य जनस्य प्रवेशं सा न असहत । परन्तु पञ्चषाणां दिनानाम् अनन्तरं तहशनिकोवः तत्र उपस्थितः एव । एलिसरस्य पार्श्वे काञ्चित् नारीं सोऽपि न निरीक्षितवान् आसीत् । ताम् एलिसरः परिणेतुकामः इति ज्ञात्वा तु सः नितरां खिन्नः अभवत् ।

एकान्ते सः एलिसरम् उक्तवान् च – "मित्र ! डेबोरा यद्यपि सुन्दरी गुणिनी च, तथापि अहं चिन्तयामि यत् भवतः ध्येयमार्गे सा निश्चयेनापि कण्टकायेत । यतः सा खलु स्त्री । सुशिक्षिते पविवारे सुखेन प्रवृद्धा कोमलाङ्गी सा । भवान् तु कण्टकाकीर्णे मार्गे प्रस्थितः पथिकः । एवं सति ततः भवतः न सहकारः, प्रत्युत कष्टानि एव अधिकानि भवेयुः ।"

एलिसरस्य स्वप्नः अन्यः एव आसीत् । सः उक्तवान् - "परम् अहं तां नितरां कामये मित्र ! अहं चिन्तयामि यत् ध्येयमार्गे सापि मम उत्तमा सहकारिणी भविष्यति... ।"

"परं चिन्तयतु एलिसर ! भवान् हीब्रूभाषायाः पुनरुत्थानस्य स्वप्नं पश्यति । इयं तु तस्याः भाषायाः अक्षरमपि न जानाति । यद्यपि नाहं यहूद्यः, तथापि अहं यावत् जानामि तावदपि एषा हीब्रूभाषां न जानाति । एवं सति कथम् एषा भवतः सहकारिणी भविष्यति... ?"

एलिसरस्य मनसि एषः विचारः नागतः आसीदिति न । परं डेबोरायाः विषये तस्य विश्वासः अचलः आसीत् ।

तन्मध्ये तहशनिकोवः द्वित्रवारम् एकान्ते डेबोरया सह अपि वार्तालापं कृतवान् । तां प्रत्यावर्तयितुं बहुप्रयत्नं कृतवान् च । परन्तु डेबोरा अपि निश्चला एव आसीत् ।

* * *

# ३. अतः जीवति हीब्रू..!

एकस्मिन् दिने एलिसरः डेबोरया सह नौकाविहारं कृतवान् । तत्समाप्तेः अनन्तरं नद्याः तीरे तौ एव यदा आस्तां तदा अस्तं गच्छन्तं सूर्यं पश्यतः एलिसरस्य मुखात् अकस्मात् इव "अहो ! कियत् सुन्दरमेतत् !" इति वाक्यं हीब्रूभाषया निःसृतम् । डेबोरा यद्यपि हीब्रूभाषां न जानाति, तथापि तदङ्गीकुर्वती तदेव वाक्यं पुनरुच्चारितवती आसीत् - "आम्, कियत् सुन्दरम् !"

ताभ्यां कृतं प्रथमं हीब्रूसम्भाषणम् आसीत् तत् । ततः स्वीयस्य इस्रेल्-देशस्य दिशि मुखं कृत्वा एलिसरः शनैः उक्तवान् - "प्रिये डेबोरे ! तत्र...., यत्र अस्माकं पूर्वजैः अध्युषितं, तस्मिन् पवित्रे देशे जोर्डन्नद्याः तीरे द्विसहस्रवर्षाणाम् अनन्तरं जन्म प्राप्स्यतः प्रथमस्य हीब्रूमातृभाषिणः शिशोः माता भवती भविष्यति । प्रथमा हीब्रूमातृभाषिणी माता इति ख्यातिः भवदीया भविष्यति !"

"परन्तु भवान् स्मरति खलु यत् इतोऽपि आवयोः विवाहः न सम्पन्नः इति..." - झटिति स्मारितवती डेबोरा ।

"आम् । स्मरामि । कैरोनगरे आवाभ्यां करणीयं प्रथमं कार्यमेव तत् ।" - एलिसरः सविश्वासम् उक्तवान् । डेबोरायाः सर्वाः अपि चिन्ताः अपगताः ।

कैरोनगरे एकस्मिन् दिने एलिसरः डेबोरां तहशनिकोवं च कामपि पूर्वसूचनां विना कस्यचित् पुरोहितस्य गृहं नीतवान् । किमर्थम् अत्र आगतम् ? इति ताभ्यां यावत् न पृष्टम्, एलिसरः तस्य यहूद्यपुरोहितस्य तत्पत्न्याश्च पुरतः डेबोरायाः हस्तौ गृहीत्वा एकम् हीब्रूवाक्यम् उच्चारितवान् । 'किमेतत् ?' इति आश्चर्येण पश्यन्तौ तौ सः पुरोहितः उक्तवान् - "आम् । यहूद्य-सम्प्रदायानुसारं द्वयोः साक्षिणोः पुरतः सम्यक् उच्चारितम् एतत् एकमात्रं वाक्यमपि द्वयोः परिणयं सम्पादयति । इदानीम् आवयोः समक्षम् एलिसरेण

तत् उच्चारितम् अस्ति । अतः डेबोरया सह तस्य परिणयः सम्पन्नः अस्ति । इदानीम् अस्माभिः मिलित्वा विवाहभोजनं करणीयं, तावदेव । आगच्छन्तु । आचराम विवाहमङ्गलोत्सवम्'' इति !

एतत्सर्वं सत्यमिति विश्वसितुम् अशक्नुवती इव स्थिता आसीत् डेबोरा ।

* * *

कैरोनगरात् नौकया प्रस्थिताः ते त्रयः अपि आदौ जाफ्फानगरं प्राप्तवन्तः । तेषां गन्तव्यं स्थानम् आसीत् जेरूसलेम् । जेरूसलें यद्यपि ततः नातिदूरे अस्ति तथापि तस्मिन् काले सौविध्यानाम् अभावात् तावद्दूरगमनाय अपि महान् कालः एव आवश्यकः भवति स्म । स्थानीयानां निदेशम् अनुसृत्य तद्दिने रात्रिपर्यन्तं तत्र एव स्थित्वा रात्रौ ततः अश्वशकटेन प्रयाणम् आरब्धवन्तः ते । स्थपुटिते मार्गे अश्वशकटेन प्रयाणं, तदपि उचितासनाभावात् राशीकृतैः वस्तुभिः इव उपविश्य गमनं महत् क्लेशकरमेव आसीत् । डेबोरा तु नितरां श्रान्ता अभवत् । परन्तु एलिसरः तन्मध्येऽपि शाकटिकस्य स्नेहं सम्पाद्य तेन सह सम्भाषणम् आरब्धवान् । एलिसरस्य चतुरता तादृशी आसीत् यत् प्रयाणसमाप्तितः पूर्वं सः शाकटिकः हायिं जेकब्नामकः तस्य परमं मित्रम् अभवत् । अग्रे हीब्रूपुनरुत्थानाभियाने महतीं भूमिकामपि सः निरवहत् ।

यदा शकटः जेरूसलें प्राप्नोत् तदा प्रातःकालः । नगरस्य मार्गेषु जनसञ्चारः आरब्धः आसीत् । एवं सञ्चरत्सु बहवः अरब्बीजनाः एव दृष्टाः । मार्गाः अस्वच्छाः दुर्गन्धपूर्णाश्च आसन् । परन्तु एलिसरस्य मनः भावपूर्णम् आसीत् । 'अस्मत्पूर्वजानां यहूद्यानां परमपवित्रं नगरम् एतत् । तेषां पादरजसा प्रत्यङ्गुलं भूमिः अपि अत्र पवित्रा' इति भावनया सः आक्रान्तः आसीत् ।

जेरूसलेंनगरे एलिसरस्य परिचितः एकः एव आसीत् फ्रम्किन्-नामकः, यश्च स्वीयपत्रिकायाम् एलिसरस्य लेखं प्रकाशितवान् आसीत् । एलिसरः तस्य गृहम् अन्विष्यन् तत्र प्राप्तवान् । फ्रम्किन् एतान् सहार्दं स्वागतीकृतवान् । तस्य लेखविषये सुदीर्घां चर्चामपि कृतवान् । ततश्च एलिसरस्य अग्रिमयोजना का ? इति अपृच्छत् ।

"अत्र एव स्थातव्यम् इति तु निश्चितम् । परन्तु न जाने कथम् इति । मम सविधे एकस्मात् सुवर्णनाणकात् ऋते नान्यत् किमपि अस्ति । मम इदानीं झटिति उद्योगः आवश्यकः । आवासस्यापि व्यवस्था भवेत्" - एलिसरः अवदत् ।

विशालहृदयः फ्रम्किनः तद्दिने एव एलिसरं स्वीयपत्रिकायाः उपासम्पादक-रूपेण नियुक्तवान् । अग्रिमव्यवस्था यावत् न भवति तावत् स्वीये गृहे एव निवस्तुम् एलिसरपरिवारं निमन्त्रितवान् च । एलिसरस्य समस्यानां तात्कालिकः परिहारः प्राप्तः आसीत् ।

परन्तु पञ्चषेषु दिनेषु एव एतत् अनुभूतं यत् डेबोरायाः फ्रम्किनस्य पत्न्या सह समञ्जनं न तावत् सुकरम् इति । अतः ताभ्यां निर्णीतं यत् झटिति अन्यत्र आवासः चिन्तनीयः इति । एलिसरस्य निकटे एकस्मात् नाणकात् ऋते नान्यत् किमपि आसीत् । उद्योगस्य निमित्तं वेतनं तु मासान्ते एव प्राप्तुं शक्यमासीत्; न तु तत्पूर्वम् । तथापि सः निराशः न जातः । नगरे सर्वत्र गत्वा गृहान्वेषणम् अकरोत् । अन्ते च काचित् गृहस्वामिनी स्वस्य गृहे प्रकोष्ठद्वयं दातुम् अङ्गीकृतवती । परन्तु तत् स्थानं प्राप्तुं मुख्यमार्गात् सुदूरमेव गन्तव्यम् आसीत् । तच्च प्रकोष्ठद्वयम् अट्टे आसीत्, यत् प्राप्तुं रज्जुनिर्मितया निःश्रेण्या आरोढव्यम् आसीत् । नान्या गतिः इति कृत्वा ताभ्यां तद् अङ्गीकृतम् । तत्र गतम् । आवासश्च आरब्धः ।

इदानीं तु एलिसरः सर्वथा रिक्तहस्तः आसीत् । गृहनिमित्तम् अत्यावश्यकानि त्रिचतुराणि वस्तूनि आनेतुमपि तस्य समीपे धनं नासीत् । तस्य चिन्ताम् अवगत्य झटिति डेबोरा पार्श्वस्थम् आपणं गत्वा तत्र स्वेन मातृगृहे प्राप्तम् आभरणमेकं विक्रीय किञ्चित् धनम् आनीतवती । डेबोरायाः जीवने त्यागस्य आरम्भः इत्थं जातः आसीत् ।

* * *

तस्मिन् दिने कार्यालयं प्रति एलिसरस्य गमनानन्तरं डेबोरा प्रथमं गृहं स्वच्छीकृतवती । तदा तया स्मृतं यत् मध्याह्नभोजननिमित्तं गृहे किमपि नास्ति इति । कुतश्चित् सुपिष्टकं क्रेतव्यम् इति सा अचिन्तयत् । पितुः गृहे

सुखेन प्रवृद्धा डेबोरा गृहकृत्यैः अपरिचिता एव आसीत् । अतः कस्याश्चित् मार्गदर्शनम् आवश्यकमिति मत्वा सा पार्श्वगृहस्थां गृहिणीम् आहूतवती । सा कुतूहलेन एव आगता । तां नमस्कृत्य स्वीयं परिचयम् उक्त्वा डेबोरा अवदत् – ''भगिनि ! मया सुपिष्टकं क्रेतव्यम् । समीपे कुत्र लभ्यते ?''

सा च गृहिणी विस्मयेन इव डेबोरां पश्यन्ती उक्तवती – ''पुत्रि ! यहूद्य-महिलया कदापि सुपिष्टकं न क्रीयते, अपि तु निर्मीयते ...।''

''अस्तु भगिनि ! तथैव करिष्यामि । परन्तु अहं तत् न जानामि । भवती कृपया मां शिक्षयति खलु ?''

''न हि ! सर्वथा न हि । न केवलम् अहम्, अपि तु न कापि अन्या भवतीं किमपि न शिक्षयति, यावत् भवती पूर्णरूपेण यहूद्या इव न व्यवहरति । न कापि यहूद्या एवम् अनावृतकेशा तिष्ठति, गृहान्तः अपि । प्रथमं वस्त्रेण केशान् संवृणोतु । ततः अहं भवतीं पाककार्यं शिक्षयामि ।''

''तथैव अस्तु भगिनि !'' – डेबोरा विनयेन उक्तवती । तथैव कृतवती च । सा च गृहिणी सन्तृप्ता सती तां शिक्षितवती ।

एलिसरः यदा प्रत्यागतः तदा गृहे पचन्तीम् आवृतकेशां डेबोरां दृष्ट्वा विस्मितः अभवत् । सः जानाति स्म यत् आधुनिकपरिवेषे प्रवृद्धा डेबोरा एतादृशेषु साम्प्रदायिकेषु आचरणेषु न केवलम् अविश्वासवती, अनासक्ता अपि इति । विस्मयेन पश्यन्तं तं डेबोरा अवदत् – ''प्रिय ! यदि अत्रत्यैः वयम् अङ्गीकृताः भवामः तर्हि एव कालान्तरे अस्माकं विचाराः एतैः अङ्गीकृताः भविष्यन्ति । वयमपि तदैव अङ्गीकृताः भवेम यदा वयं पूर्णरूपेण यहूद्याः इव आचरामः, यहूद्याः एव भवामः । अतः भवदीयविचारस्य पोषणाय एव मम ईदृशः व्यवहारः ।''

एलिसरः प्रीत्या अभिमानेन च पत्नीम् आलिङ्गितवान् । उक्तवान् च – ''आं प्रिये ! स्वकार्यसम्पादनाय आवाभ्यां स्वजीवने एतादृशानि बहूनि परिवर्तनानि अवश्यम् आनेतव्यानि एव । एतच्चु मया पूर्वमेव चिन्तितम् आसीत् । परन्तु भवती एतत् कथं कुर्यात् इति मम आतङ्कः आसीत् । इदानीं तु अहं निश्चिन्तः अस्मि ।''

एलिसरः अपि स्वीये बाह्यरूपे परिवर्तनं कृतवान् । साम्प्रदायिकः यहूद्यः इव दीर्घं कञ्चुकं धृतवान् । तस्य मुखे अङ्गुलदीर्घं श्मश्रु व्यराजत । तौ अत्यन्तं जागरूकतया यहूद्यानां साम्प्रदायिकजीवनशैलीम् अनुसृतवन्तौ । प्रतिसबात्दिने (साप्ताहिकपर्वदिने) प्रार्थनामन्दिरं गतवन्तौ, साम्प्रदायिकेन वेषेण । तत्र अन्यैः मिलित्वा प्रार्थनां कृतवन्तौ । परन्तु तत्र नेत्रे निमील्य तिष्ठतोः अपि तयोः अवधानं प्रार्थनापेक्षया अधिकं हीब्रूभाषया उच्चार्यमाणेषु मन्त्रेषु, प्रार्थनापद्येषु च एव भवति स्म । 'एतेषु के शब्दाः नित्यजीवने व्यवहारपथम् आनेतव्याः' इति निरन्तरं चिन्तयति स्म एलिसरः ।

'शलाम्' इति कश्चन शब्दः । 'सुप्रभातम्' इत्यर्थे तस्य प्रयोगः । एलिसरः यदा अन्यं पश्यति तदा तं हीब्रूभाषया 'शलां' शब्दकथनेन अभिनन्दति इदानीम् । परन्तु तस्य मुखात् हीब्रूशब्दं श्रुत्वा जनाः विस्मयं प्राप्नुवन्ति स्म । ते तु निरुत्तराः भवन्ति स्म । यं यं पश्यति तस्य तस्य पुरतः सः वदति 'शलाम् ।' बालाः केचन एलिसरम् अनुकुर्वन्तः तस्य उपहासं कुर्वन्ति स्म । एलिसरस्य गमनमार्गे कुत्रापि आत्मानं गोपयित्वा तया एव शैल्या तेऽपि 'शलाम्' इति उच्चारयन्तः तं पर्यहसन् । तथापि एलिसरः न विचलितः । सः जानाति स्म यत् एतत्तु तात्कालिकम् । अतः सः धैर्येण स्वीयं प्रयत्नम् अनुवर्तितवान् । 'द्विसहस्त्रवर्षेभ्यः पूर्वं व्यवहारपथात् दूरं गतायाः भाषायाः व्यवहारे पुनरानयनाय मया पर्वतोपामः प्रयासः एव करणीयः' इति सः निश्चितवान् ।

* * *

कस्मिंश्चित् सुप्रभाते कश्चन सज्जनः बेन्यहूदस्य (एलिसरस्य) गृहद्वारे शब्दं कृतवान् । निस्सिं बेहर-नामकः सः स्वीयपरिचयं कारयित्वा उक्तवान् – "श्रीमान् ! मया कश्चन विद्यालयः आरप्स्यते । भवान् तत्र शिक्षकरूपेण कार्यं करोतु इति निवेदयितुम् अहम् आगतः ।"

"भवितुम् अर्हति । परं समयेन । अहं तत्र हीब्रूभाषया एव पाठयिष्यामि । अहं स्पष्टं जानामि यत् एतत् भवान् नाङ्गीकरोति इति ।"

"मया तु एतदेव इष्टम् । अतः एव भवतः समीपम् आगतवान् अस्मि ।

हीब्रूभाषया शिक्षणं दातव्यम् इत्येषः मम बहुदिनानां स्वप्नः । तं साकारं कर्तुं भवान् एव समर्थः इति मत्वा आगतं मया'' ।

बेन्यहूदः सन्तोषेण एव तम् उद्योगम् अङ्गीकृतवान् । यतः पत्रिका-सम्पादनकार्यं तु तस्य जीविकानिर्वहणाय पर्याप्तं न आसीत् । आर्थिकसमस्या महती आसीत् । यदा बेन् यहूदः एतां सन्तोषवार्तां डेबोरां श्रावितवान् तदा सा स्मयमाना अवदत् - ''प्रियकर ! दैवमपि सुमुखम् अस्ति इति भाति आवयोः । समुचिते समये एतादृशः उद्योगावसरः प्राप्तः भवता । यतः....!''

अग्रे तया नोक्तं चेदपि तस्याः नेत्रयोः कान्त्या एव 'मम पत्नी गर्भवती अस्ति' इति वार्तां ज्ञातवतः बेन्यहूदस्य आनन्दस्य पारः एव नावशिष्टः । तद्दिने रात्रौ बहुकालं यावत् ताभ्यां निद्रा न कृता । तस्याः उदरस्य उपरि मृदुतया वात्सल्येन च हस्तं सञ्चालयन् बेन्यहूदः उक्तवान् - ''प्रियतमे, डेबोरे ! अहो भाग्यं भवत्याः यत् द्विसहस्रवर्षाणाम् अनन्तरं जनिष्यमाणस्य प्रथम-हीब्रूमातृभाषिशिशोः जन्मदात्री भवती भविष्यति । अहो, जनिष्यमाणस्य आवयोः शिशोः भाग्यं, येन परमपवित्रा हीब्रूभाषा एव श्रूयते, नान्या । परं तदर्थं डेबोरे ! भवत्या तु तथा जागरूकया भवितव्यं यथा सः अन्यां भाषां सर्वथा न शृणुयात् । कानिचित् वर्षाणि यावत् अन्यसम्पर्कात् दूरे गृहबन्धने इव स्थापनीयः भवेत् अपि सः । अस्माकं गृहे तु नान्यभाषाशब्दाः श्रूयेरन् ऋते हीब्रूभाषायाः । द्विसहस्रवर्षाणाम् अनन्तरं निर्मीयमाणं प्रथमं हीब्रूगृहं भविष्यति अस्माकम् ... !''

बेन्यहूदस्य स्वप्नाः डेबोरायाः मनसि विस्मयं यथा तथा भयमपि अजनयन् । यतः इदानीमपि सा हीब्रूभाषया नित्यव्यवहारं कर्तुं शक्ता नासीत् । अन्यच्च ऋते पत्युः, केन सह तया हीब्रूभाषया वक्तुं शक्यम् आसीत् ....! तथापि डेबोरा प्रतिप्रश्नं विना पत्युः वचनम् अङ्गीकृतवती ।

विद्यालये बेन्यहूदस्य पाठनम् आरब्धम् । सः हीब्रूभाषया एव पाठयति स्म । आरम्भे एव तद्विषये अन्यशिक्षकेभ्यः विरोधः आगतः । ''परमपवित्रया हीब्रूभाषया लौकिकविषयाणां पाठनम् .. ! सर्वथा अनुचितम् एतत्'' इति आक्षिपन् ते । बेन्यहूदः यदा कक्ष्यातः बहिः आगच्छति तदा अज्ञातरूपेण

स्थित्वा शिलाखण्डान् तदुपरि क्षिपन्ति स्म ते । परन्तु बेन्यहूदेन छात्राणां मनः जितम् आसीत् । तेषु तस्य प्रभावः अवर्धत । ते हीब्रूभाषाम् ऐच्छन् । अतः बेन्यहूदः नितरां सन्तुष्टः । क्रमशः विद्यालये छात्रसंख्या अपि प्रवृद्धा । निस्सिं बेहरः अपि सन्तृप्तः जातः ।

एकदा जेरूसलेंनगरस्य मुख्यमार्गे डेबोरया सह उच्चैः हीब्रूभाषया सम्भाषमाणः गच्छति स्म बेन्यहूदः । कश्चन जनः विस्मयेन तौ अपश्यत् । ततः यहूदम् अपृच्छत् च – "क्षम्यताम्; भवद्भ्यां कया भाषया सम्भाषणं क्रियते ..?"

"हीब्रूभाषया .... ।" – बेन्यहूदः अवदत् ।

"परन्तु हीब्रूभाषया न कोऽपि वदति । सा तु मृतभाषा ...!"

"भवतः चिन्तनम् असाधु मित्र ! अहं जीवामि । मम पत्नी जीवति । आवां हीब्रूभाषया वदावः । अतः हीब्रूभाषा अवश्यं जीवति ..!" आत्मविश्वासेन उक्तवान् बेन्यहूदः ।

* * *

पत्रिकासम्पादनं विद्यालये पाठनं चेति द्विविधं कार्यम् अङ्गीकृतम् इति कारणेन इदानीं बेन्यहूदेन द्विगुणितं कार्यं करणीयम् आपतितम्, येन सः पर्याप्तमात्रेण विश्रान्तिं न प्राप्नोति स्म । अतः तस्य कासः अपि प्रवृद्धः । डेबोरया परामृष्टः वैद्यः अवदत् यत् तेन अवश्यं विश्रान्तिः स्वीकर्तव्या इति । परं बेन्यहूदः अभिप्रैति यत् स्वस्य आरोग्यं न तथा महत्त्वपूर्णम् इति । अन्यच्च जनिष्यमाणस्य जगतः सर्वप्रथमस्य हीब्रूशिशोः सुस्थितौ स्वागती-करणाय सुखेन तस्य पालनाय च अपेक्षिताम् आर्थिकस्थितिं प्राप्तुम् उभयत्र कार्यकरणं प्रकृतं तु अनिवार्यमेव इति सः निश्चितवान् आसीत् । 'दिनानि अल्पानि । करणीयानि कार्याणि बहूनि' इत्येतत् पुनः पुनः स्मरन् सः अहोरात्रं कार्यमग्नः भवति स्म ।

कस्मिंश्चित् दिने बेन्यहूदः प्रकोष्ठे अध्ययनं कुर्वन् आसीत् । तदा गृहात् बहिः कश्चित् कोलाहलं श्रुत्वा भीता डेबोरा अन्तः आगत्य निवेदितवती – "बहिः उच्चध्वनिना कोलाहलं कुर्वन् कश्चन गणः दृश्यते । हीब्रूभाषया

वदन्तः ते कोलाहलं कुर्वन्तः सन्ति । अहं चिन्तयामि यत् ते आवयोः अहितं किमपि आचरितुमेव आगताः सन्ति । का गतिः इदानीम् ... ?''

परं बेन्यहूदः शान्तस्वरेण सविश्वासम् अवदत् - ''यदि हीब्रूभाषया वदन्ति तर्हि ते अस्मदीयाः हितैषिणः एव । चलतु, पश्याव'' इति । तौ बहिः आगत्य दृष्टवन्तौ । तत्र युरोपीयशैल्या अलङ्कृताः उपविंशाः युवति-युवकाः दृष्टाः । बेन्यहूदं दृष्ट्वा ते सर्वे झटिति तं परिवार्य स्थित्वा अवदन् - ''गुरो ! वयं भवतः शिष्याः स्मः ।''

पुनः केचन अवदन् - ''सेनापते ! भवतः सैन्यस्य सैनिकाः वयम् । भवदीयाम् आज्ञां प्रतीक्षमाणाः स्मः । आदिशतु, किं करणीयम् इति !''

* * *

# ४. पवित्रभाषया 'अपवित्र'विचारः...!

दिग्भ्रान्तः बेन्यहूदः किञ्चित्कालानन्तरं ज्ञातवान् यत् ते युरोपतः आगताः विश्वविद्यालयच्छात्राः इति । ते सर्वे तदीयान् लेखान् पठित्वा तथा प्रभाविताः यत् क्रियमाणम् अध्ययनम् अपि त्यक्त्वा तस्य कार्ये सहकारिणः भवितुम् एवम् आगताः आसन् । तत् ज्ञातवतः बेन्यहूदस्य नेत्रे अश्रुपूर्णे जाते । परं स्वीयां दुरवस्थां स्मरतः तस्य नितरां खेदोऽपि जातः । तावद्दूरतः आगतेभ्यः एकं भोजनं दातुमपि सः समर्थः न आसीत् । सर्वेभ्यः पेयमात्रं वितीर्य सः झटिति तेषाम् आवासव्यवस्थां कल्पयितुं यत्नवान् जातः । स्वस्य सुहृदः हितैषिणश्च ये आसन् तेषां सर्वेषां साहाय्यं स्वीकर्तुं निश्चितवान् सः । तेषु एकैकस्य गृहे एकस्य व्यवस्था भवति चेदपि समस्या परिहृता भविष्यति इति तस्य विचारः ।

महता प्रयत्नेन सः कथमपि तेषां तात्कालिकीं व्यवस्थां कर्तुं शक्तः जातः । तेषु केचन प्रतिभाशालिनः केषुचित् विषयेषु प्राप्तानुभवाः चापि आसन् । तेषां प्रतिभायाः अनुभवस्य च सदुपयोगः स्वीकरणीयः हीब्रूभाषा-प्रचारकार्ये इति बेन्यहूदः निश्चितवान् । सौभाग्यवशात् तेषु बहवः हीब्रू-सम्भाषणे समर्थाः आसन् । द्वित्राः तेन हीब्रूशिक्षकरूपेण नियुक्ताः । कश्चित् हीब्रूहितैषिणं वणिजं बेन्यहूदः निवेदितवान् - "भवान् स्वीये आपणे कर्मचारित्वेन एतेषु अन्यतमं नियोजयतु । एषः आपणे आगतैः ग्राहकैः सह हीब्रूभाषया एव सम्भाषणं करिष्यति, नान्यया भाषया । एतेन भवता हीब्रूप्रचारकार्ये महत् योगदानं कृतं भवति" इति । सः ससन्तोषं तत् अङ्गीकृतवान् । एवमेव अन्येषामपि व्यवस्था कृता तेन । केचन तु कृषिकार्यं कुर्वतां कर्मकराणां मध्येऽपि स्थापिताः । तन्मध्ये निवसन्तः ते तत्रापि हीब्रूभाषाप्रसारम् अकुर्वन् ।

युरोपतः छात्राः आगताः यथा, तथैव क्रमशः अनेके परिवाराः अपि इस्रेल्देशे वासाय आगताः बेन्यहूदस्य लेखान् पठित्वा । बेन्यहूदेन तेषामपि

व्यवस्था करणीया अभवत् । तेषाम् उत्साहः यथा रक्षितः भवेत् तथा कर्तुं, तदपेक्षितां भूमिं, वाणिज्यं व्यवहारं वा तेभ्यः दापयितुं च तेन महान् श्रमः एव वोढव्यः अभवत् । तथापि सः प्रयत्नेन सर्वं कृतवान् । नैके परिवाराः इस्त्रेल्देशम् आगत्य प्रतिष्ठापिताः अभवन् ।

अत्रान्तरे डेबोरायाः प्रसवदिनं सन्निहितम् । धनाभावकारणतः बेन्यहूदः तस्याः निमित्तम् अपेक्षितस्य मञ्चस्यापि व्यवस्थां कर्तुं न शक्तः । साहाय्यार्थं काचित् महिला तु नियुक्ता । १८८२तमे वर्षे कस्मिंश्चित् दिने बेन्यहूदः शुभवार्तां प्राप्तवान् यत् तदीयचिन्तनानुसारं द्विहस्रवर्षाणाम् अनन्तरं सर्वप्रथमः हीब्रूमातृभाषिकः शिशुः तस्य गृहे जातः । शिशोः प्रसवसमयेऽपि परिचारिका बेन्यहूदेन कठोरं सूचिता आसीत् यत् तया न कोऽपि शब्दः उच्चारणीयः इति । यतः सा हीब्रूभाषां न जानाति स्म । जनिष्यमाणः शिशुः नान्यां भाषां शृणुयात् इति निर्णयः आसीत् बेन्यहूदस्य । तदनुसरन्ती सा परिचारिका मौनेन एव सर्वाणि कार्याणि निरूढवती । जातस्य शिशोः कर्णे डेबोरा प्रथमं हीब्रूशब्दमेव उच्चारितवती 'मत्पुत्रक.. !' इति ।

डेबोरा पुत्रं प्रासूत इति वार्तां श्रुत्वा प्रतिवेशिन्यः काश्चन नवजातं शिशुं द्रष्टुम् आगताः । परन्तु प्रसूतिकागृहस्य द्वारे एव स्थित्वा यहूदः तासां हीब्रूज्ञानस्य परीक्षां कृतवान् ! "यदि भवती हीब्रूभाषां जानाति तर्हि अन्तः गच्छतु, शिशुं पश्यतु, वदतु च । यदि हीब्रूं न जानाति तर्हि बहिः आगमन-पर्यन्तं भवत्या एकोऽपि शब्दः न उच्चारणीयः" इति समयं परिकल्प्य एव सः एकैकामपि अन्तः प्रेषितवान् ।

शिशोः बेन्झियोन् इति नामकरणं कृतम् । सः एव शिशुः हीब्रूनवोत्थानस्य इतिहासे सर्वप्रथमः हीब्रूमातृभाषिशिशुत्वेन आगमिकाले प्रसिद्धो जातः ।

यहूद्येषु काचित् प्रथा अस्ति यत् नवजातः पुंशिशुः यदि हस्ताभ्याम् उन्नीयते तर्हि सन्ततिहीनाः अपि महिलाः सन्ततिं प्राप्नुवन्ति इति । एतदनुसारम् अनेकाः तादृश्यः महिलाः बेन्यहूदस्य गृहमागताः नवजातं शिशुम् उन्नेतुम् । परन्तु बेन्यहूदः तासु एकैकस्याः अपि हीब्रूज्ञानं परिशील्य एव शिशोः

उन्नयने अवसरं कल्पितवान् !

* * *

बेन्झियोनः दिने दिने शनैः प्रवर्धते स्म । बेन्यहूदस्य कठोरानुशासन-कारणतः सः मातापितरौ विहाय अन्येषां दर्शनमपि विरलतया एव प्राप्नोति स्म । ये हीब्रूभाषया वक्तुं समर्थाः तेषां केवलं शिशुसमीपगमनम् अनुमन्यते बेन्यहूदः । मासान् यावत्, वर्षं यावत् मातापित्रोः एव मुखदर्शनेन, प्रायः तयोः एव सम्भाषणश्रवणेन तस्य शिशोः मस्तिष्के नान्यत्किमपि चित्रं मुद्रितं स्यात् ऋते तयोः चित्राभ्याम् । मम पुत्रः सर्वप्रथमं हीब्रूपदानि एव उच्चारयिष्यति, ततश्च अन्यभाषामिश्रणरहितया शुद्धया हीब्रूभाषया एव सम्भाषणं करिष्यति इति बेन्यहूदस्य दृढः विश्वासः आसीत् । परन्तु हा हन्त ! वर्षे अतीते सत्यपि शिशुः एकमपि शब्दं न उच्चारयामास । पुनरपि द्वित्राः मासाः अतीताः । इदानीमपि शिशुः एकमपि शब्दं न अवदत् । बेन्यहूदः चिन्तितवान् यत् केषाञ्चित् बालानां सम्भाषणस्य आरम्भः विलम्बेन भवति, एतस्यापि एवमेव स्यात् इति । परन्तु अतीतेषु अपि पुनः केषुचित् मासेषु शिशुः यदा किमपि न अवदत् तदा डेबोरायाः मनसि अपि संशयः उत्पन्नः यत् किम् आवाभ्याम् उचितं कार्यं क्रियमाणम् अस्ति ? इति । तदा एव तस्याः मनसि पूर्वं केनचित् पृष्टः प्रश्नः प्रतिध्वनितः इव – 'किं भवती स्वपुत्रं हीब्रूभाषामात्रं श्रावयन्ती तं मूकं मूढं च कर्तुमिच्छति ?' तथापि सा धैर्यं धृतवती ।

पुत्रस्य द्वितीयं जन्मदिनमपि सन्निहितम् । तदानीमपि बेन्झियोनः एकं शब्दमपि यदा न उच्चारितवान् तदा तु डेबोरायाः अपि धैर्यबन्धः त्रुटितः । नैके जनाः ताम् अवदन् – ''असम्भाव्यं किमपि साधयितुम् इच्छन् भवत्याः पतिः तत्र पुत्रं बलिपशुं करोति । जागरूका भवतु'' इति ।

''अस्माभिः पूर्वमेव उक्तं ननु, एतत्तु सर्वथा न शक्यम् । भवतोः प्रयत्नः सर्वथा विफलः एव भविष्यति इति'' इति अन्ये स्मारितवन्तः ।

एतेन नितरां खिन्नां डेबोरां सान्त्वयन् बेन्यहूदः अवदत् – ''प्रिये ! अद्यापि मम पूर्णः विश्वासः अस्ति यत् आवयोः पुत्रः शुद्धया हीब्रूभाषया

एव वदिष्यति इति । कतिचित् मासान् सहताम् । यदि तदानीमपि सः न वदिष्यति तदा तु अहं 'मम यत्नः विफलः जातः । अहं पराजितः अस्मि । हीब्रूभाषा पुनः कदापि मातृभाषा भवितुं नार्हति' इति पत्रिकायां सम्पादकीयलेखं लिखित्वा समग्रस्य जगतः क्षमां याचिष्यामि .. !''

ततः मासत्रयानन्तरं बेन्झियोनः प्रथमं शब्दम् उच्चारितवान् ! दम्पत्योः मुखे अपूर्वः हासः निर्गतः । ततः दिनेषु गच्छत्सु सः प्रतिदिनमिव नूतनं शब्दम् उच्चारयामास । शुद्धया हीब्रूभाषया काकलीम् उच्चारयन्तं, तया एव वदन्तं, हसन्तं, रुदन्तं पुत्रं दृष्ट्वा ताभ्यां दम्पतिभ्यां सार्थकता अनुभूता जीवने ।

* * *

'बेन्यहूदस्य पुत्रः बेन्झियोनः हीब्रूभाषया एव वदति' - इत्येषा वार्ता जेरूसलेंनगरे सर्वत्र प्रसृता । तं विशिष्टं शिशुं द्रष्टुं बहवः ज़नाः बेन्यहूदस्य गृहम् आगच्छन् । एकस्मिन् शनिवासरे सायङ्काले तु उपविंशाः जनाः आगताः, येषु नगरस्य प्रमुखाः, कश्चन यहूद्यधर्मगरुः चापि आसन् । बेन्यहूदः यथापूर्वं द्वारे एव स्थित्वा तेषु एकैकस्यापि हीब्रूसम्भाषणक्षमतां परिशील्य तदनन्तरमेव पुत्रस्य सन्दर्शनाय अनुमतिं दत्तवान् । आगताः सर्वेऽपि बेन्झियोनस्य मुखात् निःसृतं हीब्रूसम्भाषणं श्रुत्वा नितरां विस्मयं प्रकटितवन्तः । ललाटे चुम्बित्वा शिशुम् अभ्यनन्दन् । डेबोराम् अश्लाघन्त च । बेन्यहूदं च अभिनन्दनपुरस्सरम् अवदन् - ''अद्भुतमेव किञ्चित् साधितं भवता'' इति । स च धर्मगुरुः तु शिशुं विशेषतया परिशीलयन् आसीत् ।

प्रायः घण्टाद्वयं यदा अतीतं तदा डेबोरा पुत्रस्य समीपम् आगत्य तस्य कर्णे उक्तवती - ''वत्स ! शौचगृहं गच्छ । शौचं समाप्य आगच्छ'' इति ।

डेबोरायाः मुखात् निर्गतम् एतत् वाक्यं श्रुत्वा पार्श्वे एव स्थितः सः धर्मगुरुः असहमानः उच्चैः आक्रोशत् - ''एतत्तु लज्जास्पदम् ! यया भाषया बैबल् रचितं, या च भाषा प्रार्थनायै प्रयुज्यते तां पवित्रां भाषां भवन्तः मार्गम् आनीतवन्तः । तया भाषया 'शौच'विचारमपि वदन्ति । धिक् भवतां मूर्खताम् .. !'' इत्येवं वदन् सः बेन्यहूदपरिवारं शपन् इव ततः निर्गतवान् ।

सम्मिलिताः अतिथयः सर्वेऽपि स्तब्धाः इव अभवन् ।

ततः सर्वेषु प्रतिनिवृत्तेषु अन्ते तत्र शिष्टः बेन्यहूदस्य सुहृत् पिनेस्नामकः अवदत् – "मित्र ! हीब्रूभाषायाः पुनरुज्जीवनाय भवता क्रियमाणं प्रयासम् अहम् अभिनन्दामि । भवदीये अस्मिन् युद्धे अहं सहकरोमि अपि । तथापि मित्र...! एषः प्रयत्नः ज्येष्ठानाम् अस्माकं भवतु । न तत्र शिशवः साधनत्वेन उपयोक्तव्याः । मुग्धम् एनं शिशुं तत्र बलिपशुं मा करोतु । सः इदानीं हीब्रूभाषया सर्वं वदति इति भवान् यत् चिन्तयति सा भ्रान्तिरेव । स तु श्रुतं पुनरुच्चारयति, प्रशिक्षितः शुकः इव, तावदेव । शुकभाषितमात्रम् एतत् । द्विसहस्रवर्षेभ्यः अव्यवहृतया भाषया कस्यापि शिशोः अभिवर्धनं सर्वथा न शक्यम् । सर्वाभिव्यञ्जनसमर्थया भाषया केवलं शिशोः अभिवर्धनं भवति । फ्रेञ्च्, जर्मन्, रूस् , यिड्डिष् – चेति कामपि भाषां पाठयतु तम् । तया तं लालयतु, तस्मै गायतु, कथाः श्रावयतु, येन पुष्पमिव विकसति तस्य अन्तरङ्गम् । अन्यथा सः मूर्खः एव भवति... ।"

"नैव.. । न कदापि अन्यया भाषया सम्भाषणं करोमि अहं मम पुत्रेण सह....।" – बेन्यहूदः निष्ठुरतया उक्तवान् ।

"परन्तु मित्र ...! तेन स्वपुत्रं बलिपशुं करोति भवान् ! यदि तथा करोति तर्हि न कोऽपि देवः तं शिशुं रक्षति । कृपया तं करुणया पश्यतु । यतः अस्मिन् प्रयत्ने तु भवान् कदापि सफलः न भविष्यति ....।"

"यदि प्रथमपुत्रस्य विषये मम प्रयत्नः विफलः भविष्यति तर्हि अहं प्रयत्नम् अनुवर्तयिष्यामि द्वितीयस्य अपत्यस्य विषये । यदि तत्रापि विफलः भविष्यामि तर्हि अनुवर्तयिष्यामि तृतीयस्य चतुर्थस्य चापि वा विषये । नाहं विरमामि यावत् सफलता न प्राप्येत..." – बेन्यहूदः दृढस्वरेण अवदत् ।

पत्युः वचनानि श्रुत्वा अकम्पत डेबोरा !

* * *

गच्छता कालेन बेन्यहूदेन निर्णीतं यत् मदीयान् सर्वान् अपि विचारान् मदपेक्षितरीत्या प्रकाशयितुं मया एव काचन पत्रिका सञ्चालनीया इति । परन्तु तदर्थम् अपेक्षितम् आर्थिकसामर्थ्यं तस्य सर्वथा न आसीदेव ।

तथापि सोत्साहानां नास्त्यसाध्यं नराणाम् । आदौ सः फ्रम्किन्वर्येण सह वार्तालापं कृत्वा तस्य पत्रिकायाः उपसम्पादकपदाय त्यागपत्रं दत्तवान् । ततः डेबोरया सह सुदीर्घं समालोचनं कृतवान् । सा अपि अनुकूलं प्रतिस्पन्दं प्रदर्शितवती । परं तस्याः अपि धनस्य एव चिन्ता । यतः एतावता स्वीयानि सर्वाणि अपि आभरणानि विक्रीतानि आसन् तया । बेन्यहूदः ऋणरूपेण धनं प्राप्तुं प्रयत्नम् आरब्धवान् । हीब्रूभाषाभिमानिनं कञ्चित् सः एकं सुवर्णनाणकम् ऋणरूपेण याचितवान् । सः सन्तोषेण एव दत्तवान् । पृष्टवान् च – "एतावता अल्पेन धनेन कथं पत्रिकां सञ्चालयति ?"

बेन्यहूदः प्रत्युत्तरं किमपि नावदत् । तेषु एव दिनेषु जेरूसलेंनगरस्य मुद्रणालयस्वामी कश्चन परिचितो जातः, यश्च अल्पेन व्ययेन मुद्रणं कर्तुम् अङ्गीकृतवान् । 'दि डीर्'नामिकायाः साप्ताहिकपत्रिकायाः प्रकाशनं निश्चितम् । लघ्वाकारिकायाः पृष्ठचतुष्टयात्मिकायाः तस्याः पत्रिकायाः प्रथमसञ्चिकायाः कृते सर्वान् अपि लेखान् बेन्यहूदः अत्यन्तं श्रद्धया लिखितवान् । तान् मुद्रणालयं नीतवान् महता उत्साहेन । मुद्रणालये कार्यं कुर्वत्सु कर्मकरेषु कोऽपि हीब्रूभाषां न जानाति स्म । अतः अक्षरसंयोजने बहवः दोषाः भवन्ति स्म । बेन्यहूदः तेषां हीब्रूभाषाशिक्षणं स्वयम् अक्षरसंयोजनाभ्यासं च युगपत् आरब्धवान् । मुद्रणालयस्य अस्वास्थ्यकरे परिवेषे आदिनं स्थित्वा अक्षरसंयोजनेन तस्य अस्वास्थ्यं प्रवृद्धम् । तथापि 'डीर्'पत्रिकायाः प्रथमसञ्चिकायाः चतुश्शतं प्रतिकृतयः यदा सज्जाः जाताः तदा बेन्यहूदस्य आनन्दस्य पारः एव नासीत् । मध्यरात्रे ताः पत्रिकाः स्वीकृत्य डयमानः इव सः गृहं प्राप्तवान् ।

महता कुतूहलेन पत्रिकां पठितुम् उद्यतां पत्नीं डेबोरां सः अवदत् – "प्रिये ! आदौ एतानि पुटीकर्तव्यानि । ततः तदुपरि सङ्केताः लेखनीयाः । ततश्च मूल्याङ्काः लेपनीयाः । सूर्योदयात् पूर्वं पत्रालयं प्रति प्रेषयितुम् एताः सज्जीकर्तव्याः । स्मरतु, यदि एकस्याः उपरि वा मूल्याङ्कः न भवेत् तर्हि दण्डशुल्कं दातव्यं भवति । नाहं समर्थः तत् दातुम् । अतः अत्यन्तं जागरूकतया करणीयम् एतत् ।"

बेन्यहूदस्य प्रकृतिं जानती डेबोरा किमपि अनुक्त्वा कार्यम् आरब्धवती। सूर्योदयं यावत् तयोः कार्यम् अनुवृत्तम् । कार्ये समाप्ते सति बेन्यहूदः घोषितवान् - "प्रिये ! इतःपरं प्रतिगुरुवासरम् आवयोः रात्रिः एवमेव व्यतीता भविष्यति । तत्रापि पत्रिकायाः प्रसारव्यवस्थापनं भवत्याः एव ...!"

* * *

'डीर्'पत्रिकायाः प्रथमसञ्चिकायाः त्रिशतं ग्राहकाः प्राप्ताः । सम्पूर्णतया हीब्रूभाषया प्रकाशितां तां पत्रिकां पठितवतां तेषां विभिन्नाः प्रतिस्पन्दाः आगताः । केचन परमसन्तुष्टाः । देवभाषायाः व्यावहारिकम् उपयोगं दृष्ट्वा सनातनवादिनः केचन कुपिताः अपि । प्रथमसञ्चिकां प्रत्यक्षरं नैकवारं पठितवती डेबारा तद्विषये पतिं मुक्तमनसा श्लाघितवती । सा जानाति स्म यत् पत्रिकाप्रकाशनं बेन्यहूदस्य अत्यन्तं प्रियं कार्यम् इति । अतः सा सर्वाणि अपि स्वीयकष्टानि सहमाना तस्य साहाय्यं कर्तुं निश्चितवती ।

ततः आरभ्य बेन्यहूदस्य कार्यं द्विगुणितं जातम् । प्रतिगुरुवासरं तस्य दिनं मुद्रणालये यापितं भवति स्म । शुक्रवासरे प्रातः पत्रिका पत्रालयं प्रति प्रेषणीया आसीत् । अतः गुरुवासरे रात्रौ पत्रिकामुद्रणम् अनिवार्यम् । तत् कार्यं त्वरां विना यद्यपि द्वित्रदिनेभ्यः पूर्वमपि समापयितुं शक्यम्, परन्तु बेन्यहूदः पत्रिकायाः तथा प्रकाशनं नेच्छति । गुरुवासरे प्रातःकालपर्यन्तं प्रवृत्तानां घटनानामपि प्रत्यक्षां वार्तां प्रकाशयितुम् इच्छुकः सः तावत्पर्यन्तमपि प्रतीक्ष्य अनन्तरमेव पत्रिकाः मुद्रणाय प्रेषयति स्म । अतः प्रतिगुरुवासरं तयोः आरात्रि जागरणम् अनिवार्यमेव जातम् ।

* * *

विद्यालये पाठनं पत्रिकासम्पादनं चेति एतदुभयमपि निर्वोढुं न शक्यम् इति बेन्यहूदेन अल्पेन एव कालेन ज्ञातम् । अतः सः विद्यालयकार्याय त्यागपत्रं दत्त्वा स्वीयं सर्वमपि समयं पत्रिकासम्पादने एव विनियुक्तवान् । एतेन यद्यपि पत्रिकाकार्याय सः अधिकं समयं प्राप्तवान्, परन्तु तदीया आर्थिक-परिस्थितिः नितरां शोचनीया एव जाता । पत्रिकायाः आयापेक्षया व्ययः एव अधिकः भवति स्म । प्रतिसप्ताहं मुद्रणकागदक्रयणाय,

मुद्रणकाराय, पत्रालयाय च धनं दातव्यमेव । अन्यथा अग्रिमसञ्चिका प्रकाशिता नैव भविष्यति । अतः बेन्यहूदः प्राप्तं सर्वमपि धनं तन्निमित्तमेव उपयुञ्जानः स्वीयं परिवारम् उपेक्षितवान् एव । डेबोरा तु निस्सहाया आसीत् । श्रान्त्या गृहमागतं पतिं समाधातुं, तस्मै पूर्णोदरं स्वादिष्टं किमपि सज्जीकृत्य दातुं च सा सर्वदा प्रयासरता भवति स्म । परं बहुषु दिनेषु तयोः पर्याप्तमात्रेण आहारं सेवितुमपि न शक्यमासीत् धनाभावात् । तथापि स्वयं निराहारा तिष्ठन्ती पतिं भोजयति स्म साध्वी डेबोरा ।

कदाचित् एवं प्रवृत्तम् - रात्रौ विलम्बेन मुद्रणालयात् प्रत्यागतं पतिं स्वागतीकृत्य डेबोरा तस्य आहारव्यवस्थां कल्पितवती । तद्दिने तु चषकमितं दुग्धं, सुपिष्टकस्य एकं खण्डं च विना नान्यत्किमपि आसीत् गृहे । तदेव उष्णीकृत्य पत्युः पुरतः संस्थाप्य गन्तुम् उद्यतां पत्नीं बेन्यहूदः अवदत् - "डेबोरे । भवती जानाति यत् अहं एकाकी खादितुं नेच्छामि इति ..।"

झटिति उक्तवती डेबोरा - "भवता ज्ञातव्यं किञ्चिदस्ति प्रिय ! अहम् इदानीमपि पूर्वमिव भवितुं न शक्नोमि । अधुना तु मम पुत्रः अस्ति । शिशोः माता अहं भवदागमनपर्यन्तमपि आहारसेवनाय प्रतीक्षितुं न शक्नोमि । अतः मया पूर्वमेव आहारः सेवितः ...।"

"साधु कृतवती प्रिये ! क्षन्तव्यः अहम्" इति वदन् बेन्यहूदः आहारं स्वीकृतवान् सन्तृप्त्या । वास्तविकीं स्थितिं तु जानाति स्म डेबोरा केवलम् । यदि तस्याः आहारसेवनं न समाप्तम् इति जानाति तर्हि सः उद्विग्नः भवति । तन्मध्येऽपि किञ्चित् सेवितुम् ताम् अनुरुणद्धि । तावन्तमपि आहारं न सेवते चेत् दुर्बलप्रकृतिकस्य तस्य का कथा भवेत् ! एतत्सर्वं विचिन्त्य सा एवम् असत्यम् उक्तवती आसीत् ।

तया तु मासे नैकवारम् एवं करणीयं भवति स्म । परन्तु एतदर्थं न कदापि खेदः अनुभूतः तया । पत्युः कृते सर्वमपि सहमाना सती सा तस्य मनोबलं वर्धयितुं निरन्तरं प्रयतते स्म । बेन्यहूदेन सह विवाहात् पूर्वमेव सा भाविनि काले एतादृशं जीवनं सम्मुखीकर्तुं मानसिकरूपेण सज्जा आसीदेव ।

* * *

# ८. नैके विघ्नाः नूतनमार्गे.. !

गच्छता कालेन 'डीर्'पत्रिकायाः जनप्रियता प्रवृद्धा । तस्याः पृष्ठसंख्या अपि द्विगुणिता जाता । बेन्यहूदः क्रमशः नूतनान् व्यावहारिकशब्दान् पत्रिकाद्वारा वाचकेभ्यः परिचाययितुं प्रयत्नं आरब्धवान् । तेषु एव दिनेषु हीब्रूभाषया लिखितानां पाठ्यपुस्तकानाम् आवश्यकता तेन अनुभूता । अतः सः शिक्षकाणां कश्चित् गणं कृत्वा तत्र एतस्य विचारस्य उपस्थापनं कृतवान् । तान् पुस्तक-लेखने नियोजितवान् च । तन्मध्ये नित्यव्यवहारे सर्वेषु अपि अवसरेषु हीब्रू-भाषायाः प्रयोगः कर्तुं शक्यते इति नाटकानां द्वारा परिणामकारितया बोधयितुं शक्यम् इति तेन चिन्तितम् । अतः नाटककाराणां सम्पर्कः तेन कृतः । तेषु स्वस्य प्रभावं जनयित्वा हीब्रूभाषया आधुनिकनाटकानि सः लेखितवान् । बालाः युवकाश्च समाजे तत्र तत्र गत्वा तानि नाटकानि अभिनीतवन्तः । तेन भाषाप्रचारे महती उपलब्धिः अपि प्राप्ता ।

बेन्यहूदस्य बुद्धिः सदा नवनवोन्मेषशालिनी आसीत् । सा सर्वदा नूतनान् मार्गान् गवेषयति । भाषाप्रचारस्य विविधान् उपायान् चिन्तयति । तदनुगुणं तस्य शरीरं यद्यपि न सहकरोति, तथापि बेन्यहूदः स्फुरितां सर्वामपि योजनां झटिति एव कार्यान्वितां कर्तुं प्रयतते स्म । सूर्योदयात् पूर्वमेव उत्थानं, मध्यरात्रपर्यन्तमपि कार्यकरणं च तस्य नित्याभ्यासः एव जातः । एषु दिनेषु सः दिने नवदश घण्टाः यावत् कार्यं करोति । 'क्षयरोगिणा भवता विश्रान्तिः स्वीकरणीया' इति डेबोरायाः वैद्यस्य वा कथनं श्रुत्वा सः वदति स्म - "कालः अत्यल्पः अस्ति, करणीयम् अनल्पम् अस्ति.. !"

कदाचित् सः डेबोराम् अवदत् - "प्रिये, अहं चिन्तयामि यत् अद्य अस्माकं महती आवश्यकता अस्ति आधुनिकस्य हीब्रूशब्दकोषस्य । 'शब्दकोषः' इत्यस्य एव हीब्रूशब्दः न दृश्यते, अहो दुर्गतिः ! अतः मया शब्दकोषनिर्माणकार्यमपि करणीयं भवति ..।"

"आम् । तस्य आवश्यकता तु अस्ति एव । तादृशं विद्वत्कार्यं कर्तुं भवान् समर्थः इत्यपि सत्यमेव । परन्तु तदर्थं समयं कुतः आनयति भवान्.. ?"

"कथमपि समञ्जनं करणीयमेव डेबोरे ! आरम्भं तु करिष्यामि । देवो दयालुः । कमपि मार्गं दर्शयति सः । प्रतिदिनं तदर्थमपि कञ्चित् समयं कल्पयामि ...।"

इत्थं बेन्यहूदेन शब्दकोषनिर्माणकार्यम् आरब्धं, यच्च कार्यं प्रायः पञ्चाशत्वर्षात्मकं दीर्घकालं स्व्यकरोत्, येन च बेन्यहूदस्य नामापि इतिहासे अजरामरम् अभवत् !

* * *

बेन्यहूदस्य दारिद्र्यं प्रवृद्धम् । तन्मध्ये तस्य द्वितीयः पुत्रः अपि जातः । तस्य शिशोः जनननिमित्तम् उत्सवाचरणं दूरे तिष्ठतु, तस्मिन् काले डेबोरायै अपेक्षितम् आहारं क्रेतुमपि तस्य आर्थिकं सामर्थ्यं न आसीत् । तत्रापि बौद्धिकलोके एव सर्वदा मग्नः बेन्यहूदः व्यावहारिकलोकस्य एतादृशीनां समस्यानां विषये न कदापि चिन्तयति । ताः सर्वाः समस्याः एकाकिन्या डेबोरया सम्मुखीकर्तव्याः आसन् । तथापि सा कथमपि सर्वं निर्वहति ।

जेरूसलेंनगरस्य बहिर्भागे कस्यचन भूस्वामिनः निवासस्य उपगृहे इदानीं तेषां वासः आसीत् । कदाचित् बेन्यहूदेन 'दि डीर्'- पत्रिकायां सम्पादकीयलेखः कश्चन लिखितः, यत्र सः प्रतिपादितवान् यत् 'भूस्वामिनः एते अत्यन्तं क्रूराः । ते निर्धनानां विषये निष्करुणतया व्यवहरन्ति । नगरे इदानीं जलस्य अभावः अस्ति । निष्करुणाः भूस्वामिनः अवसरमेनं सदुपयुक्तं कुर्वन्तः जलस्य विक्रयणं कृत्वा भूरि धनं सम्पादयन्ति । धिक् तेषां धनतृष्णाम् ! यदि शीघ्रमेव वृष्टिः न भविष्यति तर्हि एते भूस्वामिनः निर्धनानां रक्तमपि पिबेयुः' इति ।

बेन्यहूदस्य सः सम्पादकीयलेखः भूस्वामिनां क्रोधम् अजनयत् । तद्दिने गृहमागतं बेन्यहूदं तस्य गृहस्य स्वामी सः भूस्वामी परुषवाक्यैः निन्दन् उक्तवान् - "वक्रबुद्धे, भोः सम्पादक ! यत्र निवससि तस्य गृहस्य भाटकमपि नियतरूपेण दातुं न शक्नोषि ! पुनः अस्मानेव उपदिशसि ! निन्दसि च !

अधुनैव निर्गच्छ इतः । मम आश्रयः समाप्तः तव । मार्गे स्थित्वा जलार्थं भगवन्तं प्रार्थयस्व । भवत्सु विशेषकृपावान् सः भगवान् जलदानेन अनुग्रहीष्यति.. !''

एवमुक्त्वा सः भूस्वामी निष्कारुण्येन बेन्यहूदपरिवारं सवस्तु गृहात् बहिः निष्कास्य प्रेषितवान् एव । आवासार्थं गृहान्तरम् अन्वेष्टुमपि समयम् अदत्त्वा पूर्वसूचनां विनैव सः तं परिवारं मार्गपतितं कृतवान् आसीत् । तेषां पेटिकाः अन्यानि च वस्तूनि मार्गपार्श्वे क्षिप्तानि । श्रान्त्या कस्याश्चित् पेटिकायाः उपरि उपविष्टायाः डेबोरायाः अङ्के निद्राति स्म द्वितीयः शिशुः । बेन्झियोनः अपि रोदिति स्म । बेन्यहूदः स्वयं भावाविष्टः सन् पत्न्याः सान्त्वनं कथं करणीयम् इति अजानन् विचित्रां स्थितिम् अनुभवति स्म ।

अहो आश्चर्यम् ! दशनिमेषाभ्यन्तरे आकाशः कृष्णमेघैः आच्छन्नः । अकालिकी इव तस्य वर्षस्य प्रथमा वृष्टिः आरब्धा एव । झटिति वस्तूनि संगृह्य पार्श्वगृहस्य छदेः अधः स्थापितानि तैः । घण्टां यावत् महती वृष्टिः प्रावर्तत । प्रथमां वृष्टिं सम्प्राप्य सन्तुष्टाः जनाः वीथीम् आगत्य वृष्टावेव नृत्यम् अकुर्वन् । वृष्ट्यभावेन सम्भविष्यमाणां समस्याम् अधिकृत्य लिखितं लेखं निमित्तीकृत्य बेन्यहूदः गृहात् निष्कासितः आसीत् । इदानीं तु सा समस्या एव परिहृता इव । जनानां दृष्ट्या बेन्यहूदः तदा तु कश्चन देवदूतः एव जातः । तत्पक्षम् अवलम्बमानाः ते सर्वे झटिति तं गृहस्वामिनम् अनुरुद्धवन्तः यत् तेन बेन्यहूदाय वासगृहं पुनः दातव्यमेव इति । अनिच्छन् अपि सः भूस्वामी जनानुरोधं सोढुम् अशक्तः पुनरपि आवासाय तस्य अवसरं कल्पितवान् ।

सर्वेषां वस्तूनाम् अन्तःस्थापने मध्यरात्रसमयः सन्निहितः अभवत् । तेषां वस्त्राणि वृष्ट्या आर्द्राणि आसन् । वस्तूनि अपि क्लिन्नानि । डेबोरा शिशुं शायितवती । ''अम्ब ! महती बुभुक्षा । किमपि ददातु''– बेन्झियोनः रुदितवान् । शैत्येन कम्पते स्म सः । डेबोरायाः नेत्रयोः अश्रूणि निर्गतानि । तया तस्य निमित्तं रक्षितः एकः एव सुपिष्टकखण्डः अपि जलक्लिन्नः सन् नष्टः आसीत् । ''वत्स ! नेत्रे निमील्य शेताम् । निद्रां कर्तुं यतताम् । अम्बा

त्वदर्थं मधुरं गीतं गायति । गीतं शृण्वन् निद्रातु'' – बेन्यहूदः तम् आदिष्टवान् । तस्य शरीरं मृदुतया आस्फालयन्ती पत्या एव हीब्रूभाषया रचितं प्रेङ्खागीतं गीतवती डेबोरा । शनैः निद्रां प्राप्नोत् बेन्झियोनः ।

* * *

एषु दिनेषु बेन्झियोनस्य भाषाप्रगतिः उत्तमा आसीत् । परन्तु सः सर्वदा एकाकित्वम् अनुभवति स्म । स्वसमानवयस्कैः बालैः मेलितुं तस्मै कदापि अवसरं न दत्तवान् बेन्यहूदः । पुत्रः हीब्रूभाषामेव शृणुयात्, नान्यां कामपि इति तस्य अनुरोधः एव तत्र कारणम् । अतः दिनस्य चतुर्विंशतिघण्टाः अपि बेन्झियोनः स्वगृहे एव बन्धने इव तिष्ठति । गृहस्य प्राकारभित्तिम् अतिक्रम्य बहिः गन्तुं सः कदापि अवसरं न प्राप्नोति । तस्य न कोऽपि सखा सखी वा आसीत् । एतेन नितरां दुःखितः भवति स्म सः । यदा तस्य चत्वारि वर्षाणि अतीतानि तदा डेबोरा द्वितीयं पुत्रं प्रासूत । सः न वदति, प्रत्युत रोदनमात्रं करोति इत्येतत् दृष्टवतः बेन्झियोनस्य निराशता अभवत् । यतः तेन निरीक्षितम् आसीत् यत् अनुजः जातमात्रेण वदति इति ! अतः 'सोऽपि स्वीयम् एकाकित्वं दूरीकर्तुं न शक्नोति । मया मित्राणि सम्पादनीयानि एव' इति तस्य मनसि विचारः उत्पन्नः ।

कदाचित् गृहारामे क्रीडन् स्थितः बेन्झियोनः प्राकारात् बहिः क्रीडतः अनेकान् बालान् अपश्यत् । सा च क्रीडा अत्यन्तम् आसक्तिदायिका आसीत् । मयापि तत्र गन्तव्यम् इति बेन्झियोनस्य मनसि इच्छा जागरिता । परन्तु प्राकारद्वारं कीलितमेव भवति स्म सदा । सः जानाति यत् माता इदानीम् अनुजायाः लालने मग्ना भवति इति । अतः सः कथमपि शनैः प्राकारद्वारम् आरुह्य बहिः अवतरणम् अकरोत् । ततश्च क्रीडतां बालानां समीपम् अधावत् ।

''किम्, अहमपि भवद्भिः सह क्रीडानि ?'' सः तान् अपृच्छत् हीब्रूभाषया ।

अश्रुतपूर्वां भाषां श्रुत्वा ते यिड्डिष्भाषिकाः बालाः विचित्रमिव तं दृष्टवन्तः । बेन्झियोनः पुनरपि तमेव प्रश्नम् उच्चारितवान् । तदा तु तेषु ज्येष्ठः बालः अवदत् यिड्डिष्भाषया – ''ओ.. एषः तस्य मूर्खस्य पुत्रः... !''

एवम् उक्त्वा सः झटिति ततः अधावत् । अन्येऽपि बालाः तमेव अनुसृत्य धावन्तः ततः अदृश्याः जाताः । बेन्झियोनेन तत्र ज्ञातः शब्दः एकः एव आसीत् 'मूर्खः' इत्येषः । 'किमर्थं ते मां मूर्खं मन्यन्ते ? कुतो वा ते मया सह न क्रीडन्ति ..?' इत्येवं चिन्तयतः तस्य पादयोः शक्तिः समाप्ता इव । तत्रैव उपाविशत् सः । नेत्राभ्याम् अश्रूणि निर्गतानि ।

किञ्चित्कालानन्तरं कमपि शब्दं श्रुत्वा सः यावत् पृष्ठतः पश्यति, तत्र लाङ्गूलचालनं कुर्वन्तं बालशुनकमेकम् अपश्यत् । बेन्झियोनः प्रीत्या तम् उन्नीतवान् । हीब्रूभाषया किमपि अवदत् । सः बालशुनकः तेन उक्तम् अवगतवान् तस्य मुखमेव पश्यन् पुच्छचालनम् अकरोत् ।

''अयि बालशुनक ! त्वं वा मम सखा भवसि वा ? त्वं पुनः मां मूर्खं न मन्यसे खलु ?'' – सः अपृच्छत् ।

इदानीमपि सः बालशुनकः तस्य मुखमेव पश्यन् पुच्छम् अचालयत् । बेन्झियोनः प्रीत्या तम् आलिङ्गितवान् । तं हस्तयोः गृहीतवतः तस्य तत्रैव निद्रा आगता ।

''बेन्झियोन .. ! कुत्र अस्ति... ?'' – इति मातापित्रोः आह्वानध्वनिं श्रुत्वा सः जागरितः अभवत् । 'यदि तौ पश्यतः तर्हि मां गृहं नयतः । मम नूतनं मित्रम् एतं बालशुनकं तु गृहं नेतुं तौ नाङ्गीकुरुतः' इति चिन्तयित्वा सः आह्वानध्वनिं शृण्वन् अपि प्रत्युत्तरं न दत्तवान् । तथापि दीर्घकालस्य अन्वेषणस्य अनन्तरं ताभ्यां पुत्रः दृष्टः एव ।

''वत्स ! किमर्थम् एवम् आगतः ...? किं त्वं जानासि यत् आवाम् कथम् उद्विग्नौ इति...?'' – डेबोरा अवदत् ।

''अम्ब ! अहं बालैः सह क्रीडितुम् इच्छामि, अतः आगतः । परन्तु ते मया सह न अक्रीडन् । मां मूर्खं मत्वा ते अधावन् । परन्तु मया लब्धः अस्ति एषः नूतनः सखा । तात ! नैनं मुञ्चामि अहम् । कृपया एतं गृहं नेतुम् अनुमतिं ददातु । कृपया....।''

पुत्रस्य दीनां प्रार्थनां श्रुत्वा पिता अवदत् – ''तथैव भवतु, परन्तु समयेन । भवान् एतम् हीब्रूभाषया एव सम्बोधयेत्, नान्यया । कश्चन

शुनकोऽपि हीब्रूं जानाति इति ज्ञात्वा तदानीं वा जनाः भाषायाः अस्याः व्यावहारिकत्वम् अङ्गीकुर्वन्तु..।''

''अहं प्रतिश्रृणोमि यत् अनेन सह नान्यया भाषया वदामि तात..!'' – बेन्झियोनः अवदत् । वस्तुतः तेन ज्ञाता भाषापि सा एकैव आसीत् । अतः तत्तु तस्य कष्टाय नासीदेव ।

''सः तत्रैव तस्य 'स्पीडिः' इति नाम अकरोत् । जीवने प्रथमं मित्रं प्राप्य सः नितरां सन्तुष्टः आसीत् ।

* * *

स्पीडिः आसीत् कश्चनः उत्तमः शुनकः । अल्पेनैव कालेन सः बेन्यहूद-परिवारस्य सदस्यः जातः । बेन्झियोनः तं सम्यगेव हीब्रूभाषाम् अशिक्षयत् । अधुना सः 'गच्छ, आगच्छ, उत्तिष्ठ, उपविश, भष, गृहाण...' इत्यादीः आज्ञाः अवगत्य ताः तथैव पालयति । बेन्झियोनस्य सः न केवलं सखा, अङ्गरक्षकः अपि । यद्यपि बेन्यहूदः कुक्कुरं न इच्छति, तथापि पुत्रस्य कृते सः तं कथमपि सहते । पुत्रः कुक्कुरमपि हीब्रूभाषां पाठितवान् इत्येतत् तस्यापि अभिमानास्पदमेव ।

* * *

प्रायः षण्मासानन्तरं कदाचित् कस्मिंश्चित् सुन्दरे सुप्रभाते बेन्झियोनः गृहात् निर्गतः । अङ्गरक्षकः स्पीडिः आसीदेव तेन सह । ''मित्र ! रमणीयः खलु एषः प्रातःकालः ?'' – सः मित्रम् अपृच्छत् ।

स्पीडिः अपि तत् अङ्गीकृतवान् शिरश्चालनम् अकरोत् । ततः मार्गम् उभयतः पश्यन्तौ तौ किञ्चिद्दूरं गतवन्तौ । तत्र केचन बालाः क्रीडन्तः दृष्टाः । दूरात् तेषां वेषदर्शनादेव ज्ञायते स्म यत् ते जेरूसलेंनगरस्य अत्यन्तं रूढिवादिनां बालाः इति । बेन्झियोनः झटिति तेषां समीपं प्राप्नोत् । तेन सहैव आगतं कुक्कुरं दृष्ट्वा ईषदिव भीताः ते बालाः ।

''न भेतव्यम्, न भेतव्यम् । एषः मम सुहृत् । एषः हीब्रूभाषाम् अवगच्छति..।'' तेषां बालानां मनसि प्रभावम् उत्पाद्य सख्यं सम्पादयितुम् अयमेव अवसरः इति निश्चितवान् बेन्झियोनः । बालानां गणः तौ आवृत्य

स्थितः आसीत् । 'स्पीडे ! आगच्छ .. ।' सः अवदत् । कुक्कुरः तस्य समीपम् आगच्छत् । 'उपविश... ।' सः झटिति तत्रैव उपविश्य जिह्वया स्वस्य स्वामिनः पादं लेढि । 'स्पीडे, भष... ।' सः पुनः आदिशत् । स्पीडिः उच्चध्वनिना अभषत् । तत् श्रुत्वा बालाः द्वित्राणि पदानि पृष्ठतः अगच्छन् ।

"न भेतव्यम् । स्पीडिः किमपि न करोति । अयं नितरां साधुः । यदि इच्छन्ति तर्हि भवन्तोऽपि एतं स्प्रष्टुम् अर्हन्ति ...।" – अधुना तु निश्चयेन ते आकृष्टाः भवेयुः इति विचिन्त्यः सः अवदत् ।

परन्तु ततः किं प्रवृत्तम् ...! तेषु अन्यतमः बालः अवनमय्य शिलाखण्डमेकं गृहीत्वा शुनकस्य उपरि अक्षिपत् । बेन्झियोनः आश्चर्येण शिरः उन्नमय्य यावत् तान् पश्यति, सर्वेऽपि ते शिलाखण्डान् गृहीत्वा तयोः उपरि शिलावर्षणमेव आरभन्त । "मूर्ख...! पवित्रां हीब्रूभाषां शुनकभाषां कृतवान् यत् तस्य फलम् अनुभवतु .. ।"

बेन्झियोनः प्रयत्नेन उत्थितः । ततः धैर्यं सन्धार्य कथमपि बालानां चक्रव्यूहं भित्त्वा गृहमुद्दिश्य पलायितः महता वेगेन ।

यदा सः गृहं प्राप्तवान् तदा तत्र माता न आसीत् । लेखनकार्ये मग्नः बेन्यहूदः शिरः उन्नमय्य सम्भ्रान्तं पुत्रम् अपृच्छत् – "वत्स, किम् अभवत्.. ?"

"ते आवां शिलाखण्डैः प्राहरन् ...।" एवं वदता बेन्झियोनेन तदैव स्मृतं यत् 'मया एकाकिनं शुनकं तन्मध्ये परित्यज्य आगतम्' इति ।

"परं ते के ...?" इति पितुः प्रश्नम् अशृण्वन् एव सः तत्र धावितवान् यत्र सा घटना प्रवृत्ता । इदानीं तत् स्थानं निर्जनम् आसीत् । न कोऽपि बालः तत्र दृष्टः ।

बेन्झियोनस्य मनः अनिष्टसम्भावनां कामपि अकरोत् । तत्र परिशीलयता तेन शिलाखण्डानां राशिः दृष्टः । राशिस्थाः शिलाखण्डाः यदा अपसारिताः तदा तत्र निपतितः रक्तसिक्तः शुनकोऽपि दृष्टः । "स्पीडे ! उत्तिष्ठ । चल । गृहं गच्छाव ..।" – सः उच्चैः अक्रोशत् । परन्तु शुनकः नैव अकम्पत ! तदीयं कलेवरं हस्तयोः धारयित्वा कथमपि गृहं प्राप्तवान् बेन्झियोनः ।

गृहारामस्य एकस्मिन् कोणे तस्य शुनकस्य निखननाय गर्तमेकं निर्मितवान्

बेन्यहूदः । शुनककलेवरं गृहीत्वा तत्समीपं गच्छतः बेन्झियोनस्य नेत्रयोः अश्रुप्रवाहः । आत्मानम् अनुसरन्ती माता तेन पृष्टा – "अम्ब ! अनेन वराकेण किम् अपकृतं तेषाम् ?"

"वत्स ! भवता शुनकः हीब्रूभाषया सम्बोधितः खलु । तेषां दृष्ट्या स एव घोरः अपराधः.... ।" – डेबोरा उक्तवती । परं "तत् कथम् ?" इत्यस्य पुत्रस्य अग्रिमप्रश्नस्य उत्तरं नासीत् तस्याम् ।

"आगच्छ वत्स ! शुनककलेवरम् अत्र स्थापय । मृदा गर्तं पूरयाम.." – बेन्यहूदः उक्तवान् ।

"नैव तात ! नाहं शक्नोमि ..। अहं न मुञ्चामि मम प्रियं शुनकम् ।"

"वत्स ! एतत्तु अनिवार्यम् । मा विलम्ब्यताम् .." – बेन्यहूदः तस्य हस्ताभ्यां कलेवरं गृहीत्वा गर्ते संस्थाप्य गर्तं मृदा पूरयितुम् उद्युक्तः । बेन्झियोनः तत् द्रष्टुमपि अशक्नुवन् हस्ताभ्यां मुखम् आच्छाद्य स्थितः ।

कार्यं समाप्य बेन्यहूदः अपृच्छत् – "वत्स ! शवस्थानस्य उपरि भवतु एषा शिला । अस्याः उपरि किं वाक्यं लिखानि ..?"

"तात ..। अहं चिन्तयामि यत् एवं लिखतु – 'अत्र शेते स्पीडी-बेन्यहूदनामकः शुनकः, यः जीवने कमपि न अपीडयत्, परन्तु दुष्टानां बालानां क्रौर्येण मारितोऽभवत्' इति ..।"

"नैव वत्स ! अहं तु अन्यदेव लेखितुम् इच्छामि । एतदेव अत्यन्तम् उचितम्.." – एवं वदन् बेन्यहूदः कठिन्या बृहदक्षरैः शिलायाः उपरि इत्थं लिखितवान् – 'अत्र शेते प्रथमः हीब्रूशुनकः, यश्च स्वस्वामिनः प्रथमस्य हीब्रूभाषिकस्य बालस्य सेवायां प्राणान् अर्पितवान् ...!'

* * *

# ६. कारागारे कोमलबालाः

दिनानि अतीतानि । बेन्‌यहूदस्य कष्टानि वर्धमानानि एव आसन् । आयमूलं किमपि नासीदेव । व्ययः तु नित्यं वर्धते स्म । तस्य द्वितीयः पुत्रः अविचायिलः यदा सार्धैकवर्षीयः आसीत् तदानीमेव डेबोरा पुनरपि गर्भिणी जाता । पत्रिकायाः सम्पादने मुद्रणे प्रकाशने च मग्नः बेन्‌यहूदः पत्न्याः पुत्रयोः वा विषये किञ्चिदपि अवधानं न ददाति स्म एव । एवमेव केचन मासाः अतीताः। एषु दिनेषु डेबोरायाः अपि हीब्रूज्ञानं सम्यक् प्रवृद्धम् आसीत् । पुत्रौ अपि धाराप्रवाहरूपेण हीब्रूभाषया एव वदतः स्म । सः परिवारः वास्तविकरूपेण हीब्रूगृहत्वेन परिणतः आसीत् ।

"प्रिय...! कुतो भवान् कानिचित् दिनानि यावत् रूस्‌देशं न गच्छेत्... ?" इति कदाचित् डेबोरा पतिं पृष्टवती ।

"किन्निमित्तम्... ?" – बेन्‌यहूदः अपृच्छत् ।

"भवतः श्वशुरः भवति नितराम् आदरवान् । अस्माभिः क्रियमाणं हीब्रूपुनरुज्जीवनकार्यं तस्यापि प्रियमेव । अतः सः अस्माकं किमपि साहाय्यं कुर्यादेव... ।"

"आम् । भवत्याः कथनं तु सत्यमेव ।" – किञ्चित् विचिन्त्य बेन्‌यहूदः अवदत् – "अन्यच्च तत्र गतं चेत् प्रायः अहं पत्रिकायाः निमित्तं नूतनान् बहून् ग्राहकान् अपि प्राप्तुं शक्नुयाम् । हीब्रूहितैषिभ्यः एतस्य आन्दोलनस्य कृते आर्थिकसाहाय्यमपि प्राप्तुं शक्नुयाम् । परन्तु एतदर्थं द्वित्राः मासाः वा अपेक्षिताः भवेयुः... ।"

"किं तेन... ?"

"मम अनुपस्थितौ पत्रिकायाः का कथा भवेत्... ?"

डेबोरया तत् न चिन्तितम् इति न । तस्य दृष्टौ दृष्टिं संयोजयन्ती सा उक्तवती – "यदि भवान् अनुमन्यते तर्हि तावन्ति दिनानि अहं पत्रिकासञ्चालन-भारं निर्वक्ष्यामि... ।"

एतत्तु कदापि न चिन्तितमासीत् बेनूयहूदेन । डेबोरायाः सामर्थ्यविषये तस्य न कोऽपि संशयः आसीत् । एषु दिनेषु तस्याः भाषाज्ञानमपि गणनीयपरिमाणेन प्रवृद्धम् आसीत् यत् तत् तेनापि सानन्दम् अवलोकितम् आसीत् ।

''भवितुम् अर्हति'' – सः अवदत् । ''अहमपि पत्राचारमाध्यमेन तदा तदा लेखान् प्रेषयितुं शक्नोमि । द्वित्राणां कार्यकर्तॄणां साहाय्येन भवती एतत् निर्वोढुं शक्नुयात् । परन्तु प्रिये... ! पुत्रयोः उत्तरदायित्वं त्वदुपरि अस्ति एव । तन्मध्ये अधुना सप्तमः मासः आपन्नसत्त्वायाः भवत्याः । कथं सर्वं निर्वक्ष्यति भवती... ?''

''द्वित्रान् मासान् कथमपि निर्वक्ष्यामि । प्रत्यागते भवति सर्वाः समस्याः अपगताः भविष्यन्ति ननु ?'' – सविश्वासम् उक्तवती सा ।

बेन्यहूदस्य मास्कोगमनं निश्चितम् ।

* * *

परेद्यवि प्रातः यदा बेन्झियोनस्य जागरणम् अभवत् तदा सः स्वगृहस्य अन्तः कमपि कोलाहलध्वनिं श्रुतवान् । सम्भ्रान्तः सः स्वप्रकोष्ठात् मातुः प्रकोष्ठाभिमुखम् अधावत् । परन्तु मातुः प्रकोष्ठस्य द्वारं पिहितम् आसीत् । पुरतः दृष्टा तस्य परिचिता अनुवैद्या । ''अम्ब... अम्ब... !'' इति उच्चैः आहूतवन्तं तं निवारयन्ती सा उक्तवती – ''वत्स ! अभिनन्दनानि । तव अनुजा जाता अस्ति ।''

''एवम् ...! किमिदानीम् अहं तां द्रष्टुं शक्नोमि... ?'' – कुतूहलेन सः अपृच्छत् ।

''किञ्चित्कालानन्तरं द्रष्टुं शक्नोति, अधुनैव निद्रिता सा... ।''

परन्तु बेन्झियोनस्य मनसि विश्वासः न उत्पन्नः । सः अपृच्छत् – ''अयि भगिनि ! ह्यः एव अम्बा माम् उक्तवती यत् मासद्वयानन्तरमेव मम अनुजा जनिष्यते इति...?''

''सत्यं वत्स ! वयमपि तथैव चिन्तितवन्तः । परन्तु तव अनुजा त्वया क्रियमाणां प्रतीक्षां सोढुम् अशक्नुवती मासद्वयात्पूर्वमेव अद्य उषसि एतत्

जगत् आगतवती !'' – हसन्ती सा अनुवैद्या अवदत् ।

अत्रान्तरे अन्तः शिशोः रोदनध्वनिः श्रुतः । ''वत्स ! किञ्चित्कालानन्तरम् अहमेव त्वाम् आह्वयामि । तदा पश्यसि अनुजाम्'' इति उक्त्वा सा अनुवैद्या अन्तः गतवती ।

''मम अनुजा जाता । मम अनुजा जाता... !'' मनसि पुनः उच्चारितवान् बेन्झियोनः । 'अहो ! कीदृशी शुभवार्ता । सर्वत्र प्रसारणीया एषा' इति तस्य मनसि विचारः आगतः । झटिति पार्श्वप्रकोष्ठं गतवान् । तत्र शयितवन्तं द्विवर्षीयम् अनुजम् उत्थाप्य सः उक्तवान् – ''अविचायिल.. ! अविचायिल.. ! उत्तिष्ठ । आवयोः अनुजा जाता अस्ति... !''

परन्तु जागरिते अपि तस्मिन् न कोऽपि प्रतिस्पन्दः दृष्टः । सः सकृत् नेत्रे उन्मील्य भ्रातरं दृष्ट्वा पुनरपि ते निमील्य आच्छाद्य सुप्तवान् । निराशतया बहिः आगतः बेन्झियोनः मार्गम् अपश्यत् । केचन तत्र सञ्चरन्ति स्म । तान् उद्दिश्य इव सः अवदत् – ''भोः, मम अनुजा जाता अस्ति... !''

न कोऽपि जनः प्रतिस्पन्दं दर्शितवान् । तावता एव कुतश्चित् आगत्य गृहं प्रविशन् पिता बेन्यहूदः दृष्टः तेन । सः झटिति पितुः समीपं गत्वा अवदत् – ''तात ! शुभवार्ता अस्ति । मम अनुजा जाता अस्ति... !''

''एवं वा ? नितरां सन्तुष्टोऽस्मि... !'' – इति वदन् बेन्यहूदः तस्य चिबुकं स्पृष्ट्वा अभिनन्द्य स्वस्थानं गत्वा कानिचित् पत्राणि गृहीत्वा पुनः गमनसन्नद्धः अभवत् ।

''तात... ! क्षणं प्रतीक्षताम् । इदानीम् अनुजां दृष्ट्वा गन्तुम् अर्हति.. ।'' – बेन्झियोनः अवदत् ।

''परन्तु मम इदानीं समयः नास्ति । मुद्रणालयः गन्तव्यः । अहम् सायम् आगत्य तां पश्यामि । वत्स ! भवान् तथा जागरूकः भवतु यत् न कोऽपि शिशोः पुरतः हीब्रूभाषां विना अन्यया भाषया किमपि वदेत् । एतत् भवतः एव उत्तरदायित्वम्'' – इत्युक्त्वा झटिति धावन् इव निर्गतः एव बेन्यहूदः ।

'हन्त ! तातस्य तु अस्मदपेक्षया अपि हीब्रू एव प्रियतरा...।' – झटिति बेन्झियोनस्य मनसि विचारः उत्पन्नः । निराशतया सः मातुः प्रकोष्ठस्य

समीपं गतवान् ।

"अन्तः आगच्छ वत्स ! अनुजां पश्य...।" – अनुवैद्या तम् आहूतवती । सः अन्तः प्राविशत् । तत्र शयाना दुर्बलशरीरा माता दृष्टा । तत्पार्श्वे वर्णमये वस्त्रे शायितः सद्योजातः शिशुः । "अत्र पश्य वत्स ! एषा तव नूतना अनुजा..।" – डेबोरा उवाच ।

"अहो ! कथं सुन्दरी अस्ति ! अम्ब ! अस्याः अङ्गानि कथं लघूनि..! किं नाम भवतु अस्याः..?" – शिशुमेव पश्यन् सः अवदत् ।

"अस्माभिः चिन्तितं यत् 'येमिमा' इति भवतु । त्वं किं चिन्तयसि..?"

"येमिमा..! सुन्दरं नाम । तदेव भवतु ।" – अनुजां नेत्राभ्यां पिबन् इव पश्यन् अवदत् बेन्झियोनः ।

अनुवैद्या शिशुं हस्ताभ्याम् उन्नीतवती । शनैः आन्दोलयन्ती अराबिक्-भाषया रचितं लालनगीतं किञ्चित् गातुम् आरब्धवती । झटिति उत्थितः बेन्झियोनः अवदत् – "भगिनि ! मम अनुजा हीब्रूभाषामेव शृणुयात् । नान्यां कामपि । भवत्या तत् गीतं न गातव्यम्...।"

"हन्त ! पश्यतु डेबोरे ! अपरोऽपि आरक्षकः आगतः अस्मान् अवेक्षितुम्....!" – स्मयमाना सा अनुवैद्या अवदत् । बेन्झियोनस्य प्रसव-समयेऽपि सा एव डेबोरायाः सेवां कृतवती आसीत् । तदेव स्मरन्ती सा डेबोराम् उक्तवती – "डेबोरे ! अधुना तु अहं कांश्चित् हीब्रूशब्दान् वा जानामि । परन्तु तदा मम स्थितिः कीदृशी आसीत् जानाति वा ...?"

तानि दिनानि स्मरन्ती डेबोरा अपि हसितवती ।

* * *

'दि डीर्' पत्रिकायाः जनप्रियता वर्धमाना आसीत् । ग्राहकसंख्यायामपि वृद्धिः दृष्टा । परन्तु तदैव अन्या विपत्तिः उपस्थिता । धार्मिकविषयेषु केवलं प्रयोक्तव्या हीब्रूभाषा दि-डीर्-पत्रिकायां नित्यव्यवहारान् वर्णयितुम् उपयुज्यते इत्यतः यहूद्याः धर्मगुरवः असन्तुष्टाः आसन् । अतः ते तस्याः पत्रिकायाः विषये अपप्रचारं कृतवन्तः । स्वीयान् यहूद्यशिष्यान् आदिष्टवन्तः यत् 'एषा पत्रिका न क्रेतव्या । एतस्याः पठनमपि पापाय' इति । धर्मभीरवः

सामान्यजनाः तदङ्गीकृत्य पत्रिकाक्रयणं त्यक्तवन्तः । पत्रिकायाः ग्राहकसंख्या झटिति क्षीणतां गता । ग्राहकाभावे पत्रिकासञ्चालनमेव दुष्करं जातम्।

बेन्यहूदस्य आर्थिकी स्थितिः अधुना दुर्गतेः परां काष्ठां प्राप्नोत्। दम्पती त्रयः बालाश्च दिने सकृदपि पूर्णोदरं भोजनं न प्राप्नुवन्ति स्म। सद्यःप्रसूता अपि डेबोरा अल्पेन एव कालेन विश्रान्तिं समाप्य गृहकृत्ये मग्ना अभवत् । वस्त्राणाम् उपरि तन्तुभिः चित्रनिर्माणकलां सा ज्ञातवती। लब्धे समये तदेव कुर्वती किञ्चित् धनम् अर्जयितुं सा प्रायतत । परन्तु तेनापि अधिकं प्रयोजनं नासीत् । साहाय्यप्रार्थनायै बेन्यहूदस्य रूसदेशगमनं यद्यपि निश्चितम् आसीत्, तथापि पत्न्याः शीघ्रप्रसूतिं निमित्तीकृत्य सः गमनं व्याक्षिप्तवान् आसीत् । अधुना तु तन्निमित्तं सञ्चितं धनमपि व्ययीकृतमासीत्। मार्गान्तरम् अपश्यन्ती डेबोरा कदाचित् पतिम् अवदत् – "प्रिय ! कस्माच्चित् किञ्चित् ऋणं स्वीकृत्य वा कृपया रूसदेशं गत्वा आगच्छतु । बालाः प्रत्यहं क्षीयमाणाः सन्ति । तेषां रोदनध्वनिना आदिनं गृहं प्रतिध्वनितं भवति इति भवान् जानाति एव । भवतः कासः अपि वर्धमानः अस्ति....।"

स्वस्य कथनं श्रुत्वा दीर्घचिन्तायां मग्नं बेन्यहूदं पुनरपि उक्तवती डेबोरा – "समीपस्थे बालिकाविद्यालये फ्रेञ्चभाषाशिक्षिकारूपेण मम नियुक्तिः अङ्गीकृता अस्ति तत्रत्यैः । यदि भवान् अनुमन्यते, श्वः आरभ्य अहं तत्र गमिष्यामि । तेन अस्माकम् आर्थिकस्थितिरपि किञ्चित् उत्तमा भवेत्...।"

"परन्तु बालानां व्यवस्था का ? यदा भवती विद्यालयं गच्छति तदा ते कुत्र कथं तिष्ठेयुः ?" – बेन्यहूदः अपृच्छत् ।

"अविचायिलं येमिमां च अहं विद्यालयमेव नयामि । बेन्झियोनः पठनाय विद्यालयं गच्छतु...।"

"न कदापि...!" – बेन्यहूदः दृढस्वरेण अवदत् – "मम पुत्रं बाह्यप्रभावदूषितं कर्तुं नाहम् अवसरं कल्पयिष्यामि । यदि सः विद्यालयं गच्छति, यत्र आदिनं फ्रेञ्चभाषा एव श्रुतिपथम् आयाति तर्हि मम एतावतां वर्षाणां परिश्रमः धूलिसात्कृतः भवति । मम बालाः न कदापि गृहात् बहिः गच्छेयुः, न कदापि अन्यभाषाप्रभावदूषिताः भवेयुः...!"

पत्युः स्वभावः सम्यक् ज्ञातः आसीत् डेबोरया । अतः तस्मिन् क्षणे मौनम् आश्रितवी सा । परन्तु किञ्चित्कालानन्तरं स्वस्य बालानां च दुरवस्थां सा पुनः वर्णितवती । अधुना सावधानेन सर्वं श्रुत्वा अन्ते बेन्यहूदः अवदत् - "तथैव अस्तु डेबोरे ! भवती विद्यालयं गच्छतु । बालान् अपि नयतु । परन्तु भवती मां प्रतिशृणुयात् यत् 'मया बालाः अन्यबालेभ्यः पार्थक्येन एव रक्ष्यन्ते, अन्यभाषाभाषिकाय न कस्मै अपि बालाय एतैः मेलितुम् अवसरं ददामि इति ।"

तादृशप्रतिश्रुतेः परिणामं जानती अपि डेबोरा तत् अङ्गीकृतवती ।

* * *

परेद्यवि प्रातः एव बेन्यहूदः प्रयाणसन्नाहम् आरब्धवान् । डेबोरा त्रिभिः बालैः सह बालिकाविद्यालयम् अगच्छत् । विद्यालयस्य बहिर्भागे कश्चन प्रकोष्ठः आसीत् । सः सङ्ग्रहालयरूपेण उपयुज्यते स्म विद्यालयीयजनैः । तत्र भग्नाः आसन्दाः, उत्पीठिकाः, अन्यविधानि पीठोपकरणानि च राशिरूपेण स्थापितानि आसन् । सूर्यप्रकाशः अपि अल्पः एव तत्र । धूलिधूसरितस्य तस्य प्रकोष्ठस्य एकस्मिन् कोणे स्वीयं राङ्कवम् आस्तरणरूपेण प्रसार्य तदुपरि द्विमासदेशीयां पुत्रीं येमिमां शाययित्वा डेबोरा पुत्रौ अवदत् - "वत्सौ ! जागरूकतया रक्षणीया एषा । अहं शीघ्रमेव प्रत्यागच्छामि" इति ।

ततः तं प्रकोष्ठं तालबद्धं कृत्वा विद्यालयं गत्वा पाठितवती सा । कालांशमध्ये यदा अल्पः विरामः भवति तदा सा झटिति पुत्राणां निकटम् आगच्छति स्म । मध्ये कदाचित् खाद्यमपि किञ्चित् आनीय दत्तवती सा । बन्धने स्थिताः बालाः क्षणगणनां कुर्वन्तः कथमपि कालं यापितवन्तः । ततः सप्ताहं यावत् प्रतिदिनमपि षड्घण्टात्मकं दीर्घकालं तस्मिन् धूलिधूसरिते अन्धकारमये मलिनप्रकोष्ठे नीतवन्तः ते बालाः !

"अम्ब ! कुतः अस्मान् एवं बन्धने स्थापयति....?" - कदाचित् बेन्झियोनः मातरम् अपृच्छत् ।

"हीब्रूभाषिणः मम बालान् अन्ये केऽपि नापहरन्तु इति...!" - विनोदेन

अवदत् डेबोरा ।

"तन्नाम, अन्यभाषाभाषिणः हीब्रूभाषिणः बालान् अपहरन्ति इति किं भवत्याः आशयः... ?"

"न तथा... ।" किं वक्तव्यमिति अजानती स्थिता डेबोरा ।

"अहो, कियत् लज्जास्पदमेतत् !" – बेन्झियोनः जुगुप्सया इव अवदत्। परन्तु किञ्चित् विचिन्त्य सः कथनम् अनुवर्तितवान् – "अथवा यदि कश्चन माम् अपहरति तर्हि तदेव वरं भवेत् । यतः तदा अहं बहिः गन्तुं शक्नोमि। मित्राणि प्राप्तुं शक्नोमि... ! परन्तु भवती तदा दुःखिता भवेत् । तथापि... पञ्चषाणां वर्षाणाम् अनन्तरं कदाचित् आगतः अहं चिन्तामग्नायाः भवत्याः कर्णसमीपे मुखं संस्थाप्य 'अम्ब ! अहम् आगतः अस्मि !' इति घोषयिष्यामि चेत् रोमाञ्चिता भवेत् ननु भवती ! अतः अम्ब... ! सत्यमेव वदामि, अहम् अपहृतो भवितुम् इच्छामि । हे भगवन् ! कश्चित् माम् अपहरतु, अद्य एव... !"

नेत्राभ्यां प्रवहन्तीम् अश्रुधारां सोढुम् अशक्नुवती डेबोरा शिशून्नयनव्याजेन ततः मुखं परावर्त्य गतवती ।

* * *

तस्यां रात्रौ पत्युः शिरसि शनैः अङ्गुलीः सञ्चालयन्ती डेबोरा अवदत् – "प्रिय ! भवान् कदापि ऊहितवान् किं यत् भवतः दुराग्रहः भविष्यत्काले कीदृशं दुष्परिणामं जनयेत् इति ? अहं चिन्तयामि यत् 'कारागृहे बन्धनेन स्वस्य समग्रं बाल्यम् एताभ्यां व्यर्थीकृतम्' इति भाविजीवने आन्तं बेन्झियोनः आवां द्विषेत् । अतः मास्तु एषः दुराग्रहः । सः विद्यालयं गच्छतु नाम । अहं भवतः नाम्ना शपामि यत् सर्वदापि अहं बालैः सह हीब्रूभाषया एव वदिष्यामि इति । अतः तेषां हीब्रूसंस्कारः न कथञ्चिदपि शिथिलः भविष्यति... ।"

बेन्यहूदस्य मुखात् न कोऽपि शब्दः निर्गतः । सः तथा स्थितवान् यत् पत्न्याः वाक्यानि तेन नैव श्रुतानि । परन्तु सः दीर्घालोचने मग्नः तु आसीदेव ।

मित्रात् ऋणं प्राप्य परेद्यवि यदा सः रशियादेशं प्रति गमनाय नौकाम् आरूढवान् तदा आत्मानं प्रेषयितुं नौकापत्तनम् आगतवतीं पत्नीम् – "अस्तु डेबोरे ! बेन्झियोनं विद्यालयं प्रेषयतु । बालानां विषये सावधानता भवतु । साधयामि अहम्" इत्युक्त्वा हस्तं चालितवान् ।

"शिवास्ते पन्थानः" – डेबोरा अपि सहार्दम् आपृष्टवती ।

* * *

बेन्यहूदस्य निर्गमनानन्तरं परेद्यवि एव डेबोरा बेन्झियोनस्य विद्यालये प्रवेशं कारितवती । तस्य विद्यालयस्य प्रधानाचार्यः परिचितपूर्वः एव आसीत् । सः आनन्देन तस्मै प्रवेशं दत्तवान् । सार्धपञ्चवर्षदेशीयः बेन्झियोनः प्रथमकक्ष्यायां प्रवेशं प्राप्नोत् ।

डेबोरा प्रतिदिनं पुत्रं विद्यालयं प्रापय्य स्वयं च अविचायिलं येमिमां च गृहीत्वा बालिकाविद्यालयं गच्छति स्म । तत्र च सार्धत्रिवर्षदेशीयः अविचायिलः एव येमिमायाः रक्षकः ! सायंपर्यन्तं विद्यालये पाठयित्वा ततः गृहम् आगत्य गृहकृत्यानि निर्वहति स्म डेबोरा । रात्रौ बहुकालपर्यन्तं जागरिता सती बेन्यहूदेन लिखितान् संगृहीतान् च सर्वविधान् लेखान् सा पठति । यहूद्यानाम् इतिहासमपि सा गभीरतया अधीतवती । पत्रिकासम्पादन-कार्यं तु तस्याः आसीदेव । स्वस्य हीब्रूज्ञानवर्धनाय सा प्रत्यहं व्रतरूपेण किमपि पठति स्म ।

डेबोरा विद्यालये यद्यपि फ्रेञ्च्भाषाशिक्षिका, तथापि सा पत्युः जीवितोद्देशभूते कार्ये स्वस्यापि योगदानं कर्तुम् इच्छन्ती स्वयंप्रेरणया छात्रान् हीब्रूभाषां पाठयितुमपि आरब्धवती । बेन्यहूदेन पूर्वम् आरब्धं 'हीब्रूमाध्यमेन हीब्रूशिक्षणम्' इति विधिमेव अनुसृत्य सा पाठितवती । कक्ष्यायाम् एकमपि अन्यभाषाशब्दम् अनुपयुञ्जाना अभिनयेन चित्रादीनां साहाय्येन वा सर्वेषामपि शब्दानां बोधनं कृतवती । (गच्छता कालेन अयमेव शिक्षणविधिः भाषा-शिक्षणविधिषु अत्यन्तं शीघ्रफलदायकविधित्वेन समग्रेऽपि जगति अङ्गीकृतः अभवत् ।)

बेन्यहूदः नियतरूपेण पत्न्यै पत्राणि लिखति स्म । सापि स्वस्य बालानां

च प्रगतिं पत्रद्वारा तं ज्ञापयति स्म । यद्यपि तया प्रतिक्षणं नानाविधानि कष्टानि सोढव्यानि आसन् तथापि सा प्रेरणात्मकान् विषयान् एव पत्रे उल्लिखन्ती पत्युः प्रेरणामपि वर्धयितुं प्रायतत । 'भवान् निश्चिन्ततया निश्चितं कार्यं साधयित्वा एव प्रत्यागच्छतु । अत्रत्यं व्यवहारजातम् अहं कथमपि विना लोपं निर्वहामि । मास्तु चिन्ता' इति प्रतिपत्रं लिखति स्म सा ।

* * *

# ७. तिस्रः कक्ष्याः एकस्मिन् वर्षे

मास्कोसमीपस्थे ग्लुबोकियानगरे श्वशुरगृहे हार्दं स्वागतं प्राप्नोत् बेन्यहूदः। श्वश्रूः विशेषादरेण तस्य आतिथ्यं कृतवती। डेबोरायाः कनिष्ठा अनुजा पोला या पूर्वमपि तेन सह नितरां स्निग्धा आवुत्तं साभिमानं सगौरवं च स्वागतीकृतवती। अधुना तत्रापि हीब्रूभाषया एव सम्भाषणम् अकरोत् बेन्यहूदः। तस्य मुखात् समग्रं वृत्तान्तं श्रुत्वा श्वशुरः योनसः अवदत् - "वत्स ! भवता साधु नाचरितम्। एतादृशी दुर्दशा अस्ति इति कुतः अस्मान् पूर्वमेव न सूचितवान् भवान्? भवतु नाम, अधुना वा उक्तवान् खलु ! मम साहाय्यं तु अस्ति एव भवतः ...।"

ततः योनसः नगरे तत्र तत्र स्वीयान् सुहृदः हितैषिणश्च मेलितवान्। तत्र बेन्यहूदं नीत्वा तस्य परिचयं कारितवान्। बेन्यहूदः तेषां पुरतः स्वीयान् स्वप्नान् अवर्णयत्। बहवः तस्य कार्ये साहाय्यं कर्तुम् अङ्गीकृतवन्तः। 'दि डीर्' पत्रिकायाः ग्राहकाः अपि प्राप्ताः बहवः। तत्र तत्र उत्साहिनां छात्राणां गणाः अपि बेन्यहूदेन सम्बोधिताः। तदीयान् विचारान् श्रुत्वा बहवः उक्तवन्तः - "भवान् निश्चिन्ततया पत्रिकाप्रकाशनं करोतु। शब्दकोष-निर्माणमपि अनुवर्तयतु। वयं साहाय्यं कुर्मः" इति।

* * *

बेन्झियोनः चिन्तितवान् आसीत् यत् सकृत् विद्यालयः प्रविष्टः चेत् नूतनलोकप्रवेशस्य अनुभवं प्राप्स्यामि, यत्र स्वच्छन्दं विहरिष्यामि इति। परन्तु सप्ताहाभ्यन्तरे एव सः विद्यालयेऽपि जामिताम् अनुभूतवान्। तेन अपरिचितया भाषया शिक्षकाः किमपि पाठयन्ति, अपरिचिताभिः भाषाभिः अन्ये छात्राः किमपि किमपि वदन्ति। सः कस्यापि अर्थं नावगच्छति स्म। मूकः इव तिष्ठति स्म। परन्तु तस्य परिश्रमशीलतां दृष्ट्वा शिक्षकाः तु सन्तुष्टाः अभवन्। ते तम् अवगमयितुं यत्नम् अकुर्वन्।

सहाध्यायिनः बालास्तु बेन्झियोनस्य विषये रूक्षतामेव प्रदर्शयन्ति स्म।

ते तं विचित्रं जन्तुमिव पश्यन्ति स्म । कदाचित् 'मूक, बधिर, मूढ !' इति वा तं सम्बोधयन्तः उपहसन्ति स्म । तथापि बेन्झियोनः तेषां मनः जेतुं सख्यं सम्पादयितुं च बहु प्रयत्नम् अकरोत् । तदर्थं सः तेषु कस्मैचित् बालाय स्वीयाम् अङ्कनीम् उत्कोचरूपेण दत्तवान् । पुनः कस्मैचित् स्वीयं सुन्दरं लेखनपत्रं दत्तवान् । कस्मैचित् स्वीये भोजनेऽपि भागं प्रादात् ।

पुत्रेण विद्यालयं प्रति नीतेषु वस्तुषु एकैकमपि शनैः अदृश्यतां गच्छति इत्येतत् डेबोरया यदा लक्षितं तदा सा तद्विषये पुत्रम् अपृच्छत् । "न जाने तानि कथं चोरितानि भवन्ति" इति पुत्रेण उक्ते सा न विश्वसितवती । पुनः पुनः पृष्टे सति तया वास्तविकं कारणं ज्ञातम् । बेन्झियोनः कदाचित् मातरम् अवदत् – "अम्ब ! विद्यालये सर्वेषामपि मित्राणि सन्ति । मम तु एकमपि मित्रं नास्ति । न कोऽपि मया सह सँलपति । न्यूनातिन्यूनम् एकं वा मित्रं प्राप्तुम् अहम् इच्छामि... ।"

'अङ्कन्याः, पत्रखण्डस्य, करवस्त्रस्य वा विनिमयेन मित्रतां सम्पादयितुम् इच्छति मम पुत्रः । हन्त ! कियत् करुणाजनकमेतत् ...!' डेबोरायाः अन्तरङ्गम् आर्द्रम् अभवत् ।

* * *

तद्दिने विद्यालये बेन्झियोनः उपविष्टः आसीत् । सः आसीत् गणितस्य कालांशः । गणिताध्यापकः स्वीयया अनाकर्षकशैल्या कर्कशकण्ठेन च गणितं बोधयन् आसीत् फ्रेञ्च्भाषया । अनिष्टस्य विषयस्य बोधनम् अपरिचितया भाषया ! पञ्चनिमेषाभ्यन्तरे जामिताम् अन्वभवत् बेन्यहूदः । तन्द्राम् अनुभवतः तस्य नेत्रे शनैः शनैः निमीलिते ।

किञ्चित्कालानन्तरं परितः कलकलध्वनिं श्रुत्वा जागरितः सः पश्यति, सर्वेऽपि बालाः तमेव पश्यन्तः परस्परं हसन्तः सन्ति । शिक्षकस्य मुखेऽपि उपहासरेखा ! 'अहो किं सञ्जातम् एतेषाम् ?' इति चिन्तयित्वा झटिति अधोभागे आर्द्रताम् अनुभूय यावत् सः स्वीयम् आसनं दृष्टवान् तदा अवगतं तेन प्रवृत्तं किमिति । हन्त ! निद्रावस्थां गतस्य तस्य तत्रैव मूत्रोत्सर्गः जातः आसीत् ! तदीयम् ऊरुकम् आर्द्रम् आसीत् । लज्जया सङ्कोचेन च निर्विण्णः

बेन्झियोनः झटिति स्यूतं गृहीत्वा कक्ष्यातः बहिः अधावत् । गृहप्राप्तिपर्यन्तं सकृदपि परिवृत्य न दृष्टं तेन । पृष्ठतः अनुसरतः उपहासध्वनेः भीतः इव वायुवेगेन धावन् आगतः सः गृहस्य देहल्यां पतितः । यतः तदा माता गृहे न आसीत् । तत्रैव निद्राक्रान्तः जातः अपि ।

* * *

प्रवृत्तं सर्वं श्रुत्वा किं करणीयमित्येव न ज्ञातवती डेबोरा । पतिः अपि नासीदित्यतः सा असहाया आसीत् । बहुवारं बोधितोऽपि बेन्झियोनः पुनः विद्यालयं गन्तुं नान्वमन्यत । अन्येषां छात्राणाम् उपहासपूर्णां दृष्टिं सम्मुखीकर्तुं तस्य धैर्यं न आसीत् । सप्ताहपर्यन्तं डेबोरा प्रतिदिनं तं विद्यालयं प्रति प्रेषयितुं प्रयत्नं कृत्वापि विफला अभवत् । बेन्झियोनः गृहात् बहिः एकं पदमपि निक्षेप्तुं यदा निराकृतवान् तदा डेबोरा निरुपाया सती विद्यालयं गत्वा प्रधानाचार्यं सर्वं निवेदितवती । कुशलः सः प्रधानाचार्यः तद्दिने सायं स्वयमेव डेबोरायाः गृहम् आगतवान् । किमपि अजानन् इव बेन्झियोनेन सह सम्भाषणम् आरब्धवान् च – "बेन्झियोन ! कथं सप्ताहात् न दृष्टः भवान्..? अपि कुशलम् ?"

"कुशली तु अस्मि । परन्तु अहं कदापि विद्यालयं नैव गमिष्यामि.. ।"

"तत् कुतः ...?"

"अन्ये बालाः मां नेच्छन्ति । ते माम् उपहसन्ति.. । यतः तद्दिने.... ।"

"ओह् ! भवान् तद्दिने प्रवृत्तं स्मरति किम् ? वस्तुतः तादृशमेव मम बाल्येऽपि प्रवृत्तम् आसीत् यदा अहम् इतोऽपि ज्येष्ठः आसम् । अनन्तरं मया ज्ञातं यत् पर्याप्तमात्रेण आहारसेवनं न कृतमिति अशक्त्या तथा प्रवृत्तम् इति । अतः ततः आरभ्य सम्यक् खादामि अहम् । भवान् अपि सम्यक् खादति चेत् पुनः कदापि भवतः जीवने तादृशः प्रसङ्गः न आगमिष्यति । भवान् तु चतुरः छात्रः । अहं चिन्तयन् अस्मि यत् भवन्तं साक्षात् द्वितीयकक्ष्यां प्रेषयामि इति । किं भवान् तत् इच्छति...?"

प्रधानाचार्यस्य वचनैः आत्मविश्वासं प्राप्य अनन्तरदिने पुनः विद्यालयं गतवान् बेन्झियोनः । द्वितीयकक्ष्यामेव प्रविष्टः सः । प्रधानाचार्यस्य सूचनाम्

अनुसृत्य अन्येऽपि छात्राः तूष्णीं स्थिताः आसन् । अतः न किमपि कष्टम् अनुभूतं तेन । दिनेषु गच्छत्सु क्रमशः प्रकृतिं प्राप्नोत् बेन्झियोनः । अध्ययनेऽपि सः प्रगतिं दर्शितवान् । डेबोरा नितरां सन्तुष्टा अभवत् ।

* * *

मास्कोप्रवासात् प्रतिनिवृत्तः बेन्यहूदः पुत्रस्य प्रगतिं ज्ञात्वा तृप्तिम् अन्वभवत् । गृहे तु हीब्रूभाषया एव सम्भाषणम् इति नियमं डेबोरा कठोरतया पालितवती आसीत् इत्यतः अन्यभाषाप्रभावे सत्यपि तदीया हीब्रूभाषा स्वच्छतया निष्कलङ्कतया च रक्षिता आसीत् । तदर्थं डेबोराम् अभिनन्दितवान् बेन्यहूदः । झटिति द्वितीयं पुत्रम् अविचायिलमपि विद्यालयं प्रति प्रेषयितुं सः अङ्गीचकार । परन्तु तदा तेन नियमः कृतः आसीत् यत् विद्यालये अनौपचारिकसमयेषु यदा तौ बालौ मिलतः तदा ताभ्यां हीब्रूभाषया एव सम्भाषणं करणीयम् इति । ताभ्यां तत् अङ्गीकृतं, श्रद्धया अनुसृतमपि ।

* * *

बेन्झियोनस्य टर्किष्भाषायाः अध्यापकः नितरां कठोरः । छात्राणां दण्डनविषये सः चिन्तयति यत् 'अधिकस्य अधिकं फलम्' इति । अतः सः प्रतिदिनमपि कमपि छात्रं नियमेन ताडयति स्म । बेन्झियोनः तु तस्मै असूयति स्म । एकदा विद्यालये टर्किष्भाषायाः कालांशे बेन्झियोनः पार्श्वे उपविष्टवतः मित्रस्य कर्णे अवदत् – ''पश्यतु, तस्य शिक्षकस्य दण्डः यथा तथा तस्य कण्ठोऽपि वक्रः...।''

हासं निग्रहीतुम् अशक्तः सः बालः उच्चैः हसितवान् । अन्येऽपि केचन छात्राः तम् अनुसृतवन्तः ।

''किं प्रवर्तते तत्र..? बेन्झियोन..! उत्तिष्ठ..।'' शिक्षकः गर्जितवान् । ''त्वं किम् उक्तवान्, पुनः वद..''

''भवतः दण्डः यथा तथा कण्ठः अपि दृढः इति मया उक्तम्'' – बेन्झियोनः शब्दपरिवर्तनं कृत्वा धैर्येण उक्तवान् ।

''अहो ...! मामेव विमृशसि ! अहो ते धाष्ट्र्यम् ..!'' इत्युक्त्वा सः शिक्षकः दण्डेन तं प्रहर्तुम् उद्युक्तः अभवत् ।

"मां ताडयति ...? जागरूको भवतु, मम पिता भवतः दौर्जन्यविषये तस्य पत्रिकायां वार्तां प्रकाशयेत् । जानाति खलु, सः पत्रकारः अस्ति.." – बेन्झियोनः ततः मोक्षोपायं चिन्तयन् अवदत् ।

"जानामि तव मूर्खं पितरं तस्य पत्रिकां च । सः मां किमपि कर्तुं न शक्नोति । अनुभव तव अविनयस्य फलम्...!" इत्युक्त्वा सः तं हस्तयोः पादयोः पृष्ठे चापि निर्दयं प्रहृतवान् । तदा एव ताडनात् सः विरतः अभवत् यदा तं कोलाहलं श्रुत्वा स्वयं प्रधानाचार्यः तत्र धावन् आगत्य तस्य हस्तात् दण्डं बलात् स्वीकृतवान् ।

"न कदापि एतं विद्यालयं प्रविशामि । पर्याप्तं भोः पर्याप्तम्...!" बेन्झियोनः सकोपं सगद्गदं च उवाच ।

"चिन्तां मा करोतु । अहं भवन्तम् तृतीयकक्ष्यां प्रेषयामि । तत्र तु अयं शिक्षकः न पाठयिष्यति । अतः भवतः कापि समस्या न भविष्यति ।" – प्रधानाचार्यः परिहारोपायं सूचितवान् ।

इत्थं च एकस्मिन् एव वर्षे तिसृषु कक्ष्यासु प्रवेशः प्राप्तः आसीत् बेन्झियोनेन !

* * *

तृतीयकक्ष्यायां बेन्झियोनस्य शिक्षणे महती प्रगतिः दृष्टा । दिनेषु गच्छत्सु फ्रेञ्च्भाषाविषये सः नितराम् आकृष्टः अभवत् । तस्याः भाषायाः व्यावहारिकत्वम्, अपारा शब्दसम्पत्, सारल्यम् – इत्यादयः अंशाः तस्य मनः अहरन् । तत्तुलनया पुरातनी एषा हीब्रूभाषा अव्यावहारिकी अभासत तस्य । 'कुतः अनया वराक्या भाषया व्यवहारः करणीयः इति तातः अनुरोधं करोति ?' इति तस्य मनसि तदा तदा प्रश्नः उद्भवति स्म । 'तातस्य विरोधः अपि करणीयः' इत्यपि कदाचित् तस्य मनसि इच्छा भवति स्म ।

"अविचायिलेन सह कक्ष्येतरसमये भवान् हीब्रूभाषया एव वार्तालापं करोति खलु ?"– कदाचित् बेन्यहूदः पुत्रम् अपृच्छत् ।

"परन्तु विद्यालये आवयोः मेलनमेव विरलतया भवति । आवयोः सुहृदः अपि भिन्नाः । कक्ष्येतरसमयोऽपि तैः सहैव यापितः भवति । पुनः

आवयोः मेलनं सम्भाषणं च दुश्शकमेव...।'' – बेन्झियोनः उवाच।

''दुष्करमपि तत् कार्यं करणीयमेव वत्स !'' तातः आज्ञापितवान्। अङ्गीकृतवान् इव शिरः चालितवान् पुत्रः । परन्तु तदीयस्य अनुरोधस्य व्यवहारायोग्यत्वं निर्णीतवान् आसीत् सः ।

विद्यालयस्य फ्रेञ्च्भाषायाः शिक्षकः नितरां कुशलः आसीत् । सः कदाचित् बेन्झियोनं स्वगृहम् आमन्त्रितवान् । तत्र च तस्मै स्वीयात् सङ्ग्रहात् बहूनि फ्रेञ्च्भाषया निबद्धानि पुस्तकानि दर्शितवान् ।

'अष्टभिः दिनैः प्रपञ्चपर्यटनम्' – इत्याख्यं सुन्दरं सचित्रं च पुस्तकमेकं तस्मै दत्त्वा सः शिक्षकः अवदत् – ''वत्स ! अत्यद्भुतमस्ति एतत् पुस्तकम्। गृहं नीत्वा पठ । तत्पश्चात् प्रत्यर्पय । अन्यदपि पुस्तकं दास्यामि ।''

धन्यवादम् उक्त्वा गृहं प्रत्यागतः बेन्झियोनः । सर्वेषां, विशिष्य पितुः दृष्टिपथं परिहृत्य तत् पुस्तकं पठनीयमासीत् तेन । तस्यां रात्रौ नितरां श्रान्तः इव बहुशीघ्रमेव प्रकोष्ठे शय्यां गतः सः । ततः सर्वेषु सुप्तेषु, वातायन-समीपम् आगत्य उपविश्य तत्र प्रसृते मार्गदीपप्रकाशे महता कुतूहलेन पुस्तकपठनम् अनुवर्तितवान् । ततः सुदीर्घः कालः कथं गतः इत्येव नावगतं तेन । विलम्बेन पुस्तकं गृहीत्वैव निद्रां कृतवान् सः ।

परेद्यवि विद्यालयं प्रत्यपि तेन नीतं तत् पुस्तकम् । कक्ष्यायामपि मध्ये मध्ये शिक्षकस्य दृष्टिं परिहृत्य तेन कानिचित् पृष्ठानि पठितानि । कक्ष्येतर-समये तु सः नान्यत्किमपि अकरोत् । तथापि सुदीर्घं तत् पुस्तकं पूर्णतया पठितुं सः न शक्तवान् । तद्दिने सायं गृहागमनानन्तरं स्वीयं प्रकोष्ठं प्रविश्य वातायनसमीपे उपविश्य सः पुनरपि पठने उद्युक्तः अभवत् । तस्मिन् पुस्तके तथा लीनः अभवत् यत् मध्ये कदाचित् पार्श्वे आगत्य स्थितः अपि पिता तेन न लक्षितः ।

''किं पठसि वत्स..?'' – इति पृच्छन् पुत्रस्य हस्तात् पुस्तकं स्वीकृत्य अपश्यत् बेन्यहूदः । बेन्झियोनस्य हृदयगतिः स्तब्धा इव । 'हन्त ! हतोऽस्मि' इति विचिन्त्य तूष्णीं स्थितवान् सः ।

''एतत्तु उत्तमं पुस्तकं बेन्झियोन !'' – तत् प्रत्यर्पयन् उक्तवान्

बेन्यहूदः । "अचिरादेव हीब्रूभाषया अस्य अनुवादं कृत्वा अस्माकं पत्रिकायां धारा-वाहिनीरूपेण प्रकाशयिष्यामि । अधुना तु फ्रेञ्च्भाषया पठ । नास्ति दोषः । अचिरादेव पठिष्यसि हीब्रूभाषयापि..!"

पितुः मुखात् निर्गतानि वचनानि श्रुत्वा स्वीयकर्णयोः एव न विश्वसितवान् बेन्झियोनः । "सत्यं तात..! अस्य हीब्रूभाषया अनुवादः करणीयः ।" – सोऽपि अवदत् । परन्तु सरलया फ्रेञ्च्भाषया निबद्धा एषा कुतो वा कठिनया हीब्रूभाषया पुनः अनुवक्तव्या इति तेन नावगतम् । बेन्यहूदः ततः स्वेन हीब्रूभाषया अनूदिताः द्वित्राः तादृशीः कथाः आनीय पुत्राय दत्तवान् । यद्यपि बेन्झियोनः ताः पठितवान् तथापि तस्मै सरला सुन्दरी फ्रेञ्च्भाषा एव अधिकम् अरोचत । विद्यालयेऽपि सः फ्रेञ्च्भाषा-विषये एव सर्वप्राथम्यं प्राप्तवान्, न तु हीब्रूविषये ! एतेन नितरां निराशः कुपितश्च बेन्यहूदः सप्ताहं यावत् पुत्रेण सह सम्भाषणमेव नाकरोत् ।

* * *

वार्षिकपरीक्षाणाम् अनन्तरं विद्यालयस्य ग्रीष्मावकाशः आरब्धः । कानिचित् दिनानि यावत् बेन्झियोनः स्वतन्त्रः पक्षी इव जेरूसलेंनगरस्य मार्गं मार्गम् अटितवान् । नासीत् पठनस्य परीक्षायाः वा चिन्ता । कदाचित् अविचायिलमपि स्वीकृत्य सः नगरे अटितवान् । परन्तु सप्ताहाभ्यन्तरे एव सः तत्रापि जामिताम् अनुभूतवान् । स्वसमानवयस्कैः बालैः सह सः क्रीडितुम् इच्छति । परन्तु बेन्यहूदः पुत्रस्य हीब्रूभाषाज्ञानरक्षणविषये नितरां जागरूकः आसीत् । अतः सः अवकाशदिनेषु तस्य मित्रगृहगमनमपि न सहते स्म । यदि क्रीडनीयं तर्हि गृहे एव अनुजेन अनुजया च सह हीब्रूभाषया एव क्रीडनीयम् इति सः तम् आदिष्टवान् आसीत् । अधुना फ्रेञ्च्भाषा-शिक्षकोऽपि नगरे न आसीत् । अतः बेन्झियोनः पठितुं सुन्दराणि फ्रेञ्च्पुस्तकानि अपि न प्राप्नोति स्म । यद्यपि बेन्यहूदः तदा तदा हीब्रूभाषया स्वेन लिखिताः कथाः आनीय तस्मै ददाति, तथापि पितुः दुराग्रहकारणतः अन्तरङ्गे एव हीब्रूभाषां द्विषन् बेन्झियोनः ताः अपठित्वापि पठितमिति पितरम् असत्यं वदति स्म । पितुः विषये हीब्रूभाषायाश्चापि विषये तस्य मनसि जुगुप्सा असहना वा उत्पन्ना आसीत् !

# ८. असाधारणं युद्धम्

एकस्मिन् दिने प्रातःकाले गृहात् निर्गतः बेन्झियोनः मार्गमध्ये क्रीडतः स्वस्य मित्राणि अपश्यत् । तेषु द्वित्राः तस्य कक्ष्यायाः छात्राः एव । बेन्झियोनः तेषां समीपं यदा गतवान् तदा तं दृष्ट्वा तस्य सुहृत् डेविडः अवदत् - "बेन्झियोन ! आगच्छतु । अस्यां क्रीडायां पुनः एकस्य जनस्य आवश्यकता अस्ति । किं भवान् अस्माभिः सह क्रीडति ?"

"कथं न... ?" - इति वदन् बेन्झियोनः तेषां समीपं गतवान् ।

"परन्तु अत्र क्रीडनं नोचितम् । मार्गे सन्ति बहवः शिलाखण्डाः । वयम् अन्यस्य कस्यापि गृहस्य अङ्गणे आरामे वा क्रीडाम... ।" - तेषु कश्चन अवदत् ।

"सत्यं, वयं भवतः गृहस्य प्राङ्गणे क्रीडामः । तदेव समीपे अस्ति" - डेविडः सूचितवान् ।

"अस्माकं प्राङ्गणे ...!" - बेन्झियोनः चिन्तितः अभवत् । विषयमेनं जानाति चेत् तातः किं वदेत् इति तस्य भीतिः सञ्जाता । परन्तु सः स्मृतवान् यत् अद्य तु तातः पत्रिकामुद्रणविषये व्यस्तः मुद्रणालये तिष्ठति इति । अम्बायाः तु एतद्विषये आक्षेपः न भवेत् ।

"परन्तु मित्राणि ! अस्माकं प्राङ्गणे तु भवद्भिः हीब्रूभाषया एव सम्भाषणं करणीयम् .... !" - सः सर्वान् स्मारितवान् ।

"अवश्यम् । तत्र किमस्ति... ! अद्य क्रीडा हीब्रूभाषया एव भवतु... ।" सर्वे अङ्गीकृतवन्तः । ततः पञ्चनिमेषाभ्यन्तरे बालानां तत् सैन्यं बेन्यहूदस्य प्राङ्गणे उपस्थितम् अभवत् । हीब्रूभाषया एव वार्तालापः आरब्धः । आदौ क्रीडायाः नियमाः तैः चर्चिताः । परन्तु तत्रैव यदा चर्चा विकोपतां गता तेषु केनापि हीब्रूभाषा नैव स्मृता । किं मातृभाषया इव अन्यया भाषया कलहः कर्तुं शक्यते ? ततः क्रीडा आरब्धा । एकैकोऽपि स्वीयया मातृभाषया वदति । रषियन्-अराबिक्-यिड्डिष्-फ्रेञ्च्-भाषाः अपि तत्र प्रयुक्ताः ।

अनतिकालेन एव तन्मध्ये विवादः आरब्धः । विवादः यदा पराकाष्ठां प्राप्नोत् तदा डेविडः फ्रेञ्च्भाषया उक्तवान् – "मित्राणि ! का एषा मूर्खता....? वयमत्र क्रीडितुं सम्मिलिताः । न तु कलहं कर्तुम् । आगच्छन्तु, हस्तेन हस्तं मेलयन्तु सर्वे । अधुना वयं मतभेदं विस्मृत्य स्नेहसङ्केतरूपेण फ्रेञ्च्राष्ट्रगीतं गायामः । आरभ्यताम् । एकं, द्वे, त्रीणि...." – ततः ते सर्वेऽपि उच्चैः फ्रेञ्च्-राष्ट्रगीतं गीतवन्तः ।

गीतसमाप्तिसमये बेन्झियोनः लक्षितवान् यत् कदा वा आगतः पिता पार्श्वे एव स्थित्वा तान् बालान् पश्यन् अस्ति ! कोपोद्रेकात् तस्य शरीरं कम्पमानम् आसीत् । तस्य दर्शनेन बेन्झियोनः अपि कम्पितः । तथापि आत्मानं नियन्त्र्य कथमपि स्थितः ।

तदा एव तेषु अन्यतमः बालः बेन्यहूदम् अपश्यत् । "अहो आगतः सः मूर्खः !" सः अन्यस्य कर्णे उक्तवान् ।

"मूर्खः आगतः । धावन्तु, धावन्तु । अन्यथा सः अस्मान् मारयति !" बालाः परस्परम् उक्तवन्तः ।

"हन्त ! धिक् एतम् उन्मत्तपरिवारम्... !" इति वदन्तः ते बालाः झटिति धावन्तः ततः निर्गताः । बेन्झियोनः एकः एव तत्र स्थितः अभवत् ।

"बेन्झियोन ! अनुसर माम्" – इति उक्त्वा बेन्यहूदः गृहाभिमुखं प्रस्थितः । कम्पमानः एव तम् अनुसृतवान् पुत्रः । आत्मानं तादृशे सन्निवेशे एकाकिनं परित्यज्य गतवतां मित्राणां विषये तस्य मनसि घृणा उत्पन्ना आसीत् । तैः उच्चारिताः ते शब्दाः इतोऽपि तस्य कर्णयोः प्रतिध्वनन्ति स्म । 'कीदृशाः एते सुहृदः ! अस्तु, अधुना तातः किं कुर्यात्.... ? ताडयेत्...? उत अन्यप्रकारेण दण्डयेत्... ?'

तावता ताभ्यां गृहं प्रविष्टम् आसीत् । प्रकोष्ठं गतः बेन्यहूदः विना भाषणं स्वीयकटेः चर्मनिर्मितं कटिपट्टं निष्कासितवान् । भीत्या रोषेण चापि आत्मानमेव पश्यन्तं पुत्रं तेन निर्दयं प्रहृतवान् । एकं.... द्वे... त्रीणि.... चत्वारि । अहो कीदृशाः प्रहाराः ते ! ततः एकमपि शब्दम् अनुच्चार्य बेन्यहूदः गृहात् निर्गतः ।

बेन्झियोनस्य शरीरं व्रणितम् आसीत् । ततोऽधिकं मनः । प्रहारापेक्षया

तदवमाननमेव तस्य अधिकं वेदनाजनकम् आसीत् ।

"वत्स ! किम् अभवत् ?" – तदा एव गृहं प्रविष्टा डेबोरा पुत्रं तदवस्थं विलोक्य समीपम् आगत्य पृष्टवती । प्रवृत्तं ज्ञात्वा झटिति तस्य क्षतेषु लेप्यं किञ्चित् लेपयन्ती सा अवदत् – "वत्स ! त्वया तथा न करणीयमासीत् । त्वं जानासि एव यत् तव तातः..... "

परन्तु मातुः वचनं मध्ये एव खण्डयन् पुत्रः उक्तवान् – "जानामि अम्ब ! मम तातः कीदृशः राक्षसः इति ! सर्वेषां पितरः इव सः किमर्थं न व्यवहरति ? कुतो वा माम् एवं निर्बध्नाति... ? वदतु...।"

"वत्स ! इतोऽपि बालः त्वम् । तव तातस्य ध्येयं, तदर्थं तेन क्रियमाणं युद्धं वा अधुना अवगन्तुं न शक्नोषि । परन्तु स्मर, कस्मिंश्चित् दिने तदपि ज्ञास्यसि । तदा तातस्य विषये अभिमानम् अनुभविष्यसि, यः त्वां सर्वप्रथमं हीब्रूभाषिणं शिशुम् अकरोत्.... ।"

"नाहं सर्वप्रथमः हीब्रूभाषी शिशुः भवितुम् इच्छामि अम्ब ! अन्ये इव अहमपि सामान्यः कश्चन बालः भवितुमिच्छामि । मम तातोऽपि अन्ये पितरः इव एव भवतु । ते स्वपुत्रेषु इव सोऽपि मयि स्निह्यतु, मां कामयताम्... । तदेव अहमिच्छामि... ।"

"वत्स ! त्वम् अन्यथा गृहीतवान् असि । न जानासि त्वं तातः त्वयि कियत् स्निह्यति इति । कदापि तत्र संशयः मास्तु । सः सर्वदा कार्यव्यापृतः भवति, तव अध्ययनविषये नितराम् अनुशासनपरश्च अस्ति इति तु सत्यमेव । तथापि त्वयि तस्य अपारं प्रेम अस्ति । जानासि किं यत् त्वं यदा लघुशिशुः आसीः तदा तव कर्णयोः कति बैबल्कथाः श्राविताः तेन ? एकैकः शब्दः अपि कथं पाठितः तेन इति ?"

"अम्ब ! बहुवारं भवत्याः मुखत् एताः कथाः श्रुताः एव । नाहं तुष्यामि एताभिः । मम तातोऽपि तादृशः भवेत् यथा अन्येषां पितरः । मम स्नेहिताः मां मम तातं च मूर्खौ मन्यन्ते, उपहसन्ति च । तत् मया सोढुं न शक्यते एव.... ।"

* * *

अतीतेषु अवकाशदिनेषु विद्यालयः पुनरारब्धः । बेन्झियोनः उत्साहेनैव विद्यालयं गतवान् । 'तत्र तु मित्रैः मेलितुं तैः सह सँलपितुं च शक्यते एव । पिता तद्विषये नाक्षिपति ।'

"सुप्रभातम्...!" – विद्यालयं प्रविष्टः सः मित्राणि दृष्ट्वा तानि अभिनन्दितवान् । परन्तु हा हन्त ! तेषु एकोऽपि तस्मै प्रत्युत्तरं न प्रादात् । सर्वेषां मुखानि अपि प्रस्तरप्रायाणि ! 'किम् अभवत् एतेषाम् ? कुतः एवं व्यवहरन्ति ?' इति चिन्तयन् बेन्झियोनः स्वस्थानं गत्वा उपाविशत् । परममित्रं डेविडम् अपृच्छत् च – "मित्र ! किमिदम्... ?"

"क्षन्तव्यः अहम् । मया भवता सह वार्तालापः न करणीयः.... ?"

"तत् किमर्थम् ? तद्दिने मम तातः तथा व्यवहृतवान् इति.. ? परन्तु सः इदानीं सर्वं विस्मृतवान् अस्ति । अन्यच्च तस्मिन् दिने दण्डितः तु अहम् । न तु भवन्तः.... ।"

"न तत् कारणम् । परन्तु भवान् प्रश्नकरणेन मां न पीडयतु । नाहं भवता सह आलपामि ... ।"

"तदेव किमर्थमिति पृच्छामि..... ।"

परन्तु डेविडः उत्तरं नोक्तवान् । तावता शिक्षकः कक्ष्यां प्रविष्टवान् । पाठः आरब्धः । बेन्झियोनस्य अभासत यत् तस्मिन् दिने सः शिक्षकोऽपि अपरिचितेन सह इव तेन सह व्यवहृतवान् इति । सः तमुद्दिश्य एकं प्रश्नमपि न अकरोत् ।

भोजनविरामसमये बेन्झियोनः पुनरपि डेविडम् अपृच्छत् – "मित्र ! कृपया वदतु, मया कः अपराधः कृतः ? तद्वा वदतु...."

"तत्र पश्यतु, कारणं स्वयमेव अवगच्छति भवान्..." इत्युक्त्वा डेविडः विद्यालयस्य पुरतः विद्यमानस्य भवनस्य भित्तिं हस्तसङ्केतेन दर्शितवान् ।

बेन्झियोनः तत्र अपश्यत् । हस्तलिखितं भित्तिपत्रं किञ्चित् संलगितम् आसीत् तत्र । तदुपरि यिड्डिष्भाषया किमपि लिखितमासीत् । बेन्झियोनः तां भाषां न जानाति । परन्तु मित्राणां सकाशात् तस्याः भाषायाः पञ्चषाः शब्दाः तेन ज्ञाताः, द्वित्राणि अक्षराणि कदाचित् तेन पठितानि अपि

आसन् । अतः तत्र कृष्णवर्णीयैः बृहदक्षरैः लिखितं 'बेन्यहूद' इत्येकं शब्दं कथमपि पठितुं सः शक्तः अभवत् । 'तन्नाम एतत् भित्तिपत्रं मम पितरम् उद्दिश्य एव लिखितम् अस्ति ! किम् अपराद्धं तेन... ?' परन्तु तस्य उत्तरदाता कोऽपि नासीत् ।

तेन बहुधा अनुनीतः कश्चन छात्रः अन्ते उक्तवान् – "ह्यः भवतः पितरम् उद्दिश्य मन्दिरे कृष्णाः सिक्थवर्तिकाः ज्वालिताः सन्ति । (कस्यापि जनस्य सामाजिकबहिष्कारः क्रियते चेत् तत्सूचकरूपेण तन्नाम्ना मन्दिरे अमङ्गल-सूचिकाः कृष्णाः सिक्थवर्तिकाः ज्वाल्यन्ते ।)" रात्रौ कश्चन मार्गेषु उद्घोषमपि कृतवान् यत् 'बेन्यहूदस्य परिवारः अपवित्रः अस्ति । न कोऽपि यहूद्यः तत्परिवारजनैः सह वार्तालापं कुर्यात्....'

"मुखं पिदधातु । न जानाति किम् अनेन सह वार्तालापः न करणीयः इति.... ?" इति वदन् बेन्झियोनेन सह वार्तालापं कुर्वन्तं तं बालं हस्तेन आकृष्य अन्यत्र नीतवान् अपरः बालः ।

बेन्झियोनस्य कण्ठः अवरुद्धः अभवत् । 'किमर्थम् एवम्... ? अस्तु, तातमेव पृच्छामि । सः जानाति उत्तरम् !' इति चिन्तयन् सः ततः धावितवान् पितुः पत्रिकाकार्यालयं प्रति । मार्गमध्ये भित्तिषु तत्र तत्र तेन तानि एव भित्तिपत्राणि दृष्टानि, येषु बेन्यहूदस्य नाम स्थूलाक्षरैः कृष्णमष्या लिखितम् आसीत् । सः अनुभूतवान् यत् तानि च भित्तिपत्राणि तं दृष्ट्वा अहसन् इव ।

त्वरितपदैः मुद्रणालयं प्राप्य पितुः पुरतः स्थित्वा सः अवदत् – "तात ! किमर्थम् एते एवं व्यवहरन्ति ? भवता तेषां विषये कः अपराधः आचरितः ?"

"बेन्झियोन ! त्वम् अत्र... ? कथं विद्यालयं न गतवान् ?"

"तात ! तत्र न कोऽपि मया सह वार्तालापं करोति । ते वदन्ति यत् तैः मया सह वार्तालापः न करणीयः इति । भवतः नाम्ना ह्यः मन्दिरे कृष्णाः सिक्थवर्तिकाः ज्वालिताः इति । नगरे तत्र तत्र भित्तिपत्राणि विराजन्ते यत्र भवतः अपप्रचारः कृतः अस्ति । तात ! किमेतत् सर्वम् ?" – उद्वेगेन रुदन् अपृच्छत् बेन्झियोनः ।

"वत्स ! मास्तु उद्वेगः । समाश्वसिहि ।" – बेन्यहूदः तस्य स्कन्धे हस्तं

प्रसार्य सान्त्वनपूर्वकम् अवदत् - "चल । अहमपि तव विद्यालयम् आगच्छामि ! एतादृशेषु विषयेषु त्वया अवधानं न दातव्यम् । त्वया सम्यक् पठनीयम् । एतादृशाः विपत्तयः अन्याः अपि समागच्छेयुः । अस्माभिः इतोऽपि बलवद्भिः भवितव्यम् ।"

सः स्वस्य प्रावारकं धृत्वा पुत्रस्य हस्तं गृहीत्वा बहिः आगतवान् । तत्र स्थितः आसीत् तस्य वाहनं गर्दभः । "वत्स ! आयाहि । आरोह एनम्..." इत्युक्त्वा सः तमपि आरोप्य स्वयमपि गर्दभोपरि उपविश्य तं समचोदयत् । पितरम् अवलम्ब्य उपविष्टवतः पुत्रस्य अधुना निश्चिन्तता ! तथापि सः अपृच्छत् - "तात ! विद्यालयेऽपि कञ्चित् कालं मया सह स्थास्यति खलु भवान्... ?"

"अवश्यं स्थास्यामि । मास्तु चिन्ता... ।" - पितुः आश्वासनम् ।

मार्गे यदा भित्तिपत्राणि दृष्टिगोचराणि अभवन् तदा तानि दर्शयन् बेन्झियोनः पृष्टवान् - "तात ! किं लिखितम् अस्ति तत्र ?"

एकस्य भित्तिपत्रस्य समीपे गर्दभं स्थगयित्वा भित्तिपत्रस्थं वाक्यं पठित्वा हीब्रूभाषया तत् अनूद्य उक्तवान् बेन्यहूदः - "बेन्यहूदस्य 'दि डीर्' - पत्रिकायाः बहिष्कारः कृतः अस्ति । न कोऽपि धार्मिकः यहूद्यः तां पत्रिकां पठेत्, न वा क्रीणीयात्... ! न कोऽपि यहूद्यः तत्परिवारजनैः सह वार्तालापं कुर्यात्....!"

"परन्तु कुतः एवम् ?" बेन्झियोनः अपृच्छत् ।

"कथयामि वत्स... !"

'यद्यपि अयं बालः । तथापि अधुना तु वक्तव्यमेव' इति निश्चितवान् सः । "आयाहि ! किञ्चित् पेयं पिबाव" इति उक्त्वा सः पुरतः दृष्टम् उपाहारागृहं प्राविशत् पुत्रेण सह । तत्र शीतलं द्राक्षारसं पिबन् बेन्यहूदः पुत्रम् उक्तवान् - "वत्स ! त्वम् इतोऽपि बालः । नावगच्छेः सर्वम् । तथापि कथयामि । त्वं जानासि यत् वयं यहूद्याः सम्प्रदायशीलाः । कृषिविषये अस्माकं कश्चन कुलक्रमागतः सम्प्रदायः अस्ति यत् वयं निरन्तरं षड्वर्षाणि यावत् क्षेत्रस्य कर्षणं कुर्मः, तत्र बीजानि वपामः, धान्योत्पादनं च कुर्मः । परन्तु सप्तमे वर्षे क्षेत्रस्य विरामं दद्मः । तन्नाम प्रतिसप्तमं वर्षं न कोऽपि

यहूद्यः क्षेत्रं कर्षति । भूम्याः विश्रान्तिः तदा । तस्मिन् वर्षे क्षेत्रकर्षणं कृषिकार्यं वा पापाय इति सर्वे यहूद्याः मन्यन्ते । एतदस्ति तादृशं सप्तमं वर्षम् । अस्मिन् वर्षे मम लेखैः प्रभाविताः बहवः यहूद्याः इस्रेल्देशम् आगतवन्तः । अत्र भूमिं क्रीतवन्तः । क्रीतायां भूमौ वर्षं यावत् कृषिकार्यं न क्रियते चेत् तेषां गतिः का भवेत् ? अतः मया पत्रिकायां प्रतिपादितं यत् 'आपद्धर्मरूपेण वा अस्मिन् वर्षे तादृशैः सर्वैः अपि कृषिकार्यं करणीयम्' इति । तदङ्गीकृत्य बहवः क्षेत्राणि कृष्ट्वा बीजानि उप्तवन्तः । तत्र कारणीभूतः अहमस्मि । अतः एव मम मत्परिवारस्य च ईदृशं दण्डनम्.... !''

''अहो, अत्र अस्ति सः । निश्चिन्ततया द्राक्षारसं पिबति... । आगच्छन्तु । तं ताडयन्तु । भञ्जयन्तु तस्य अस्थीनि....'' – बहिः कश्चन युवकः एवम् उच्चैः उद्घोषितवान् । झटिति मार्गपार्श्वात् पञ्चदश-विंशतिजनानां कश्चन गणः तत्र समुपस्थितः अभवत् । सर्वेषां हस्तेषु शिलाखण्डाः बेन्यहूदः यत्र आसीत् तमेव उपाहारगृहं प्राविशन् ते । सः युवकः अङ्गुलिनिर्देशेन बेन्यहूदं दर्शयन् पुनरपि अवदत् – ''अत्रैव अस्ति सः मूर्खः.... !''

''वत्स ! चल, गृहं गच्छाव.... ।'' – अपायस्य सूचनां प्राप्तवान् इव बेन्यहूदः झटिति उत्थाय पुत्रस्य हस्तं गृहीत्वा विद्युद्वेगेन ततः बहिः आगत्य गर्दभम् आरुह्य तं समचोदयत् । धावन्तं गर्दभम् अनुसृतवन्तः ते जनाः । तमुद्दिश्य शिलाखण्डान् अक्षिपन् ते । केचन बालाः समीपम् आगत्य लगुडेन तस्य गर्दभस्य पृष्ठम् अताडयन् अपि ।

''तात ! अस्मान् मारयन्ति एव एते...'' – बेन्झियोनः भयेन आक्रुष्टवान् । गर्दभम् इतोऽपि वेगेन नेतुं प्रायतत बेन्यहूदः । मार्गे दृष्टाः अन्ये केचन नागरिकाः अपि गणं प्राविशन् । तेऽपि तस्य गणस्य कार्यमेव अनुमोदयन्तः शिलाखण्डवर्षणे भागम् अवहन् ।

''मारयन्तु । सगर्दभं निखनन्तु तौ ...'' – तेषु अन्यतमः उवाच ।

पितापुत्रयोः गर्दभस्य च शरीरे तत्र तत्र लघुव्रणाः सञ्जाताः । कथमपि पुत्रं रक्षितुं प्रायतत बेन्यहूदः । निमेषद्वयाभ्यन्तरे तैः गृहं प्राप्तम् । प्राङ्गण-प्रवेशसमनन्तरं झटिति उन्नतं प्राकारद्वारं पिधाय अर्गलं योजितवान् बेन्यहूदः । सः जानाति यत् सः गणः ततोऽपि अग्रे आगमने धैर्यं न वहति इति । तथैव

प्रवृत्तमपि । दुर्वचनैः तं पुनःपुनः निन्दित्वा सः गणः ततः प्रतिनिवृत्तः ।

गर्दभं स्वस्थानं गमयित्वा पुत्रस्य हस्तं गृहीत्वा गृहं प्रविष्टवान् बेन्यहूदः । तस्य निमित्तं द्वारम् उद्घाटितवती डेबोरा शनैः कम्पते स्म । तस्याः मुखं विच्छायमासीत् । नेत्रयोः कान्तिः अपगता इव । सा अपृच्छत् – "हन्त ! भवतोः ईदृशी कथा ! कुशलिनौ खलु भवन्तौ .....?"

"भाग्यवशात् एतावता रक्षितौ । तद् भवतु । परन्तु अस्मिन् समये भवती अत्र कथम् ? विद्यालयसमयः खलु एषः ?" – बेन्यहूदः अपृच्छत् ।

"ते माम् उद्योगात् निष्कासितवन्तः...।" – शनैः अवदत् डेबोरा ।

"हन्त ! तन्नाम एषोऽपि मम लेखस्य एव परिणामः.....?"

"प्रायः स एव । परन्तु ते मां तथा न अवदन् । 'भवत्याः स्वास्थ्यं दुर्बलम् अस्ति । कासः बाधते भवतीम् । अन्यच्च पुनः गर्भिणी अस्ति भवती । अतः षण्मासान् अष्टमासान् वा यावत् विश्रान्तिः स्वीकर्तव्या भवत्या । स्वीक्रियताम् । आगामिवर्षे वयं भवत्याः सम्पर्कं करिष्यामः । तदा पुनः आगच्छतु' इति मधुरैः वचनैः एव मां ततः प्रेषितवन्तः ..।"

"अम्ब ! तन्नाम अस्माकं गृहे अन्योऽपि शिशुः आगमिष्यति ? अहो आनन्दः ! अम्ब ! अधुना तु येमिमायाः अनुजा एव भवेत्" – बेन्झियोनः सर्वां वेदनां विस्मृत्य आनन्देन अवदत् ।

"परन्तु तदर्थम् इतोऽपि अनेके मासाः आवश्यकाः । प्रतीक्षतां वत्स !" – डेबोरा अवदत् । पतिम् उद्दिश्य सा पुनः अवदत् – "मया चिन्तितं यत् मयापि उद्योगः क्रियते । ततः प्राप्तेन वेतनेन प्रतिमासं स्वल्पं वा ऋणप्रत्यर्पणं शक्यमिति । परन्तु तावता एव एवं सञ्जातम् । तन्मध्ये अपरोऽपि शिशुः आगमिष्यति अस्माकं परिवारे । तस्यापि उदरं पूरणीयं भविष्यति । एतन्मध्ये भवतः पत्रिकायाः का गतिः भवेत् प्रिय....? वदतु, अधुना किं करिष्यामः ?"

"सर्वमपि सम्मुखीकर्तव्यं डेबोरे । नान्यः मार्गः । धीरसैनिकैः इव अस्माभिः योद्धव्यम् । अहं चिन्तयामि यत् भाविनि काले अस्माकं युद्धमेतत् इतोऽपि घोरतरं भवेत्....।"

"असाधारणं युद्धमेव एतत्...।" सापि अङ्गीकृतवती ।

# ९. क्रौर्यस्यास्ति काचित् सीमा ?

बेन्यहूदपरिवारस्य सामाजिकबहिष्कारः अनुवृत्तः । न कोऽपि जनः तस्य गृहम् आगच्छति । न केऽपि तैः सह सँलपन्ति । केचन जनाः कदाचित् तस्य गृहस्य प्राकारसमीपम् आगत्य कुत्सितैः वचनैः तान् निन्दित्वा स्वीयं जिह्वाचापलं शमयित्वा गच्छन्ति ।

परेद्यवि बेन्यहूदः पुत्रौ विद्यालयं प्रेषयितुम् उद्युक्तः । तदा डेबोरा तं निवारयन्ती अवदत् - "मास्तु बालयोः प्रेषणम् । यतः ते जनाः एतौ मारयेयुः अपि !"

"न कोऽपि तादृशं दौष्ट्यम् आचरेत् । यतः तेषां दृष्ट्या अपराधः मदीयः । किम् अपराद्धम् एताभ्यां बालाभ्याम् ! अन्यच्च एतयोः मम पत्रिकायाश्च न कोऽपि सम्बन्धः ..." - एवम् उक्त्वा बेन्यहूदः स्वयमेव पुत्रयोः वस्त्रधारणेऽपि साहाय्यं कृत्वा तौ विद्यालयं प्रति प्रस्थापितवान् ।

भीत्या एव बालाभ्यां किञ्चिद्दूरं गतम् । तावता एव नगरस्य पञ्चदशाधिकजनानां कश्चन गणः तत्र आगतः । मुग्धौ तौ बालौ परिवार्य स्थिताः ते सर्वे । "पश्यन्तु, अत्र स्तः तस्य मूर्खस्य पुत्रौ । पवित्रभाषाम् अपवित्रां कृतवतः द्रोहिणः सन्तानौ एतौ ... !" - कश्चन उक्तवान् । अन्ये तत् श्रुत्वा शिरश्चालनम् अकुर्वन् ।

"विद्यालयस्य विलम्बः भवति । आवाभ्यां गन्तव्यम् । कृपया अपसरन्तु ..." - बेन्झियोनः दैन्येन याचितवान् ।

"नैव.. । अनयोः इतः गमनाय अवसरः न दातव्यः ..." - गणे कश्चन अवदत् । ते तयोः बालयोः दृग्बन्धनमेव अकुर्वन् । कश्चन निर्दयतया तदुपरि शिलाखण्डं क्षिप्तवान् एव ।

"हा अम्ब ! तात.. !!" - शिलाखण्डस्य प्रहारं प्राप्य वेदनया आक्रुष्टवान् अविचायिलः ।

"तव पिता नितरां कार्यव्यापृतः ! अधुना तु निरतः स्यात् अन्यस्य

दुर्विचारपूर्णस्य लेखस्य सज्जीकरणे ...!'' – अन्यः कश्चन उक्तवान् उपहास-पूर्वकम् ।

''अविचायिल ! आगच्छ, धावाव...'' इति वदन् बेन्झियोनः अनुजस्य हस्तं गृहीत्वा धावितुम् उद्युक्तः अपि तदर्थं मार्गमेव अपश्यन् हताशः जातः । 'अत्रैव आवयोः मरणं निश्चितम्' – ताभ्यां चिन्तितम् ।

''रे वराकाः ! किमिदम् अनुचितम् आचर्यते ? किं न लज्जन्ते भवन्तः....?'' – तदा एव श्रुतः कश्चन परुषः कण्ठः । साक्षात् भगवान् इव तत्र प्रत्यक्षः जातः नगरस्य तक्षकः सोलोमनः । स्वीयकार्यार्थं तेन मार्गेण प्रस्थितः सः एतं कोलाहलं श्रुत्वा समीपम् आगतः आसीत् । दृढकायः सः पुनः गर्जितवान् – ''किं लज्जां नानुभवन्ति असहाययोः बालयोः पीडने ! धिक् भवतः सर्वान् ! किम् अपराद्धम् एताभ्यां शिशुभ्याम् ! विना प्रतिवचनं निर्गच्छन्तु इतः । यदि कोऽपि किमपि चेष्टते तर्हि अनेनैव मोटयामि तस्य कण्ठम् ...!''

तीक्ष्णं परशुम् इतस्ततः सञ्चालयन् स्थितवान् सः । तस्य गम्भीरं वदनं दृष्ट्वैव भीत्या सर्वे ततः पलायिताः । सः तौ गृहपर्यन्तमपि सुरक्षितरूपेण प्रापितवान् । पुरतः आगतवन्तं बेन्यहूदं दृष्ट्वा सः अवदत् – ''महाभाग ! अहं न जानामि यत् भवता क्रियमाणम् उचितम् उत अनुचितम् । परन्तु एतत्तु स्मरतु यत् ज्येष्ठानाम् अस्माकं युद्धे मुग्धाः बालाः न पशूकर्तव्याः ।''

एतावत् उक्त्वा सः झटिति ततः निर्गतवान् ।

''अहो मम पुत्रकौ ...!'' डेबोरा तौ आलिङ्गितवती । मातुः आलिङ्गनेन सर्वमपि दुःखं विस्मृतवन्तौ तौ बालौ । ततः तयोः विद्यालयप्रेषणे बेन्यहूदः अपि आसक्तिं न अवहत् ।

* * *

अतीतानि पुनः त्रीणि दिनानि । बालाः गृहबन्धने एव आसन् । बेन्यहूदः अपि शब्दकोषस्य निर्माणकार्ये मग्नः सन् गृहे एव आसीत् । अनुजेन अनुजया च सह क्रीडन् बेन्झियोनः लक्षितवान् यत् अम्बा अकस्मात् इव भित्तिम् अवलम्ब्य उपविष्टा । महतीं वेदनां सहमाना इव सा दन्तैः पुनः

पुनः ओष्ठं दशति । तस्याः नेत्रयोः कान्तिः क्षीणा !

"अम्ब ! किम् अभवत् ? भवती अस्वस्था किम् ?" – सः अपृच्छत्।

"आं वत्स ! चिन्तयामि यत् मम प्रसवकालः सन्निहितः.... ।"

"परन्तु भवत्या उक्तमासीत् यत् तदर्थं मासाः अपेक्षिताः इति ..?"

"तथापि कदाचित् एवमपि भवति वत्स .. !" सा दीर्घं निःश्वस्य तत्रैव शयितवती । बेन्झियोनः झटिति पितुः समीपं गत्वा अवदत् – "तात ! अम्बायाः प्रसववेदना आरब्धा अस्ति । किं करवाम इदानीम् ?"

"एवम् ..?" – इति पृच्छन् एव आगतः बेन्यहूदः पत्नीं दृष्ट्वा सर्वं ज्ञातवान् ।

"शीघ्रम् आनीयतां सा अनुवैद्या ...।" कष्टेन एव उक्तवती डेबोरा। बेन्यहूदः प्रावारकं धृत्वा बहिः गतवान् ताम् आनेतुम् । बेन्झियोनः मातुः समीपे उपविश्य तस्याः केशान् प्रीत्या स्पृशन् अपृच्छत् – "अम्ब ! किं जलम् इच्छति ? अहं किमपि साहाय्यं करवाणि ?"

"मास्तु वत्स ! अहं गत्वा शय्यायां शये । त्वम् अनुजयोः योगक्षेमं पश्य..." एतावत् उक्त्वा सा शनैः उत्थाय प्रकोष्ठं गत्वा शयितवती। तत्रैव उपविष्टः अपि बेन्झियोनः मातुः मुखात् निर्गच्छद्भिः अव्यक्तैः शब्दैः तया अनुभूयमानां वेदनाम् ऊहमानः आसीत् । 'हन्त ! कथमपि अम्बायाः साहाय्यं कर्तुम् अशक्तः अस्मि खलु' इति भावनया व्यग्रः आसीत् सः । निमेषाः घण्टायान्ते स्म । बेन्यहूदः न प्रत्यागतः ।

"किं सञ्जातम् अम्बायाः ..?" इति पृच्छन्तौ समीपम् आगतौ येमिमा-अविचायिलौ ।

"हुश् ...! कोलाहलः न करणीयः । अधुना अम्बा शिशवे जन्म ददाति..." – बेन्झियोनः अवदत् ज्येष्ठः इव । सः तौ तत्रैव उपवेश्य आलिङ्गितवान् । त्रयः अपि बालाः किमपि प्रतिकर्तुम् अशक्नुवन्तः मातुः वेदनाम् ऊहमानाः स्थिताः आसन् ।

सुदीर्घस्य कालस्य अनन्तरं प्रत्यागतस्य बेन्यहूदस्य मुखं कान्तिहीनम् आसीत् । "ते मम गमनमार्गमेव निरुद्धवन्तः । ते वदन्ति यत् मया तेषां

पवित्रा हीब्रूभाषा अपवित्रीकृता इति । मया अत्रत्याम् अधुनातनीं परिस्थितिं विवरीतुं यत्नः कृतः । परन्तु न कोऽपि मम वचनं श्रोतुं सज्जः तेषु.... ।" - विषादेन अवदत् बेन्यहूदः ।

"प्रिय.... ! त्वर्यताम् । अस्माकं प्रतिवेशिनीं ताम् अरब्बीयमहिलां सलीमां वा झटिति आनयतु..." - ततः एव कष्टेन अवदत् डेबोरा ।

"सलीमा..? सा च भग्नदन्ता वृद्धा किं साहाय्यं कुर्यात् अम्बायाः.... ?" - बेन्ज्झियोनः अवदत् ।

"त्वर्यताम् । शीघ्रम् आनीयतां सलीमा...." - पुनः उवाच डेबोरा ।

बेन्यहूदः तु तत् श्रुत्वा अपि निश्चलः आसीत् । सः अवदत् - "परन्तु सा अरब्बीयमहिला हीब्रूभाषां न जानाति ...। नाहम् आह्वयामि ताम्...।"

"हन्त ! न शक्नोमि सोढुम् । आनीयतां सलीमा..." - पुनरपि आक्रन्दत् डेबोरा ।

"परन्तु....." अधुनापि चिन्तयन् एव आसीत् बेन्यहूदः ।

"तात, त्वर्यताम् । भवान् गत्वा सलीमाम् आनयतु । अहम् अम्बायाः पार्श्वे भवामि ..." - सानुरोधम् अवदत् बेन्ज्झियोनः ।

निरुपायः इव इदानीं बहिः गतवान् बेन्यहूदः । किञ्चित्कालानन्तरं तेन सह आगता सलीमा । एतादृशेषु कार्येषु कुशला सा झटिति कार्यप्रवृत्ता अभवत् । प्रकोष्ठात् बहिः उपविष्टाः बालाः मातुः अव्यक्तम् आक्रन्दनं शृण्वन्तः एव निद्रां गताः । आरात्रि प्रसववेदना अनुभूता डेबोरया । अन्ततो गत्वा उषसि जन्म प्राप्तवती बेन्यहूदस्य द्वितीया पुत्री । सा नितरां दुर्बला कृशा च आसीत् । दर्शनेन एवं भासते स्म यत् सा दीर्घकालं जीवितुं न शक्ष्यति इति ।

"प्रिय ! कमपि वैद्यम् आनयतु । चिन्तयामि यत् अन्यथा एषा वराकी न जीविष्यति..." - डेबोरा उवाच ।

"सत्यम् । कश्चन वैद्यः आनेतव्यः एव.." - बेन्यहूदः अङ्गीकृतवान् । "परन्तु कथम्...? किं ते मम मार्गं नावरुन्धन्ति ... ? दुष्टाः ते मां शिलाखण्डैः प्रहरेयुः एव । कथं बहिः गच्छानि ... ?"

"तात ! मम परिचितः कश्चन साधुः अस्ति । सः वैद्यः अपि । सः मयि नितरां स्निह्यति । नगरस्य बहिर्भागे नातिदूरे गिरिमार्गे निवसति सः अन्यैः साधुभिः सह । अहम् अधुनैव आनयामि तम् ..." इत्युक्त्वा पितुः अनुमतिमपि अप्रतीक्ष्य बहिः धावितवान् एव बेन्झियोनः । तदानीं तु उषःकालः । मार्गे केचन एव सञ्चरन्तः आसन् । बेन्झियोनः त्वरितपदैः धावन् एव नगरात् बहिः गिरिमूलं प्राप्तवान् । साधूनां वसतिं प्राप्य तं परिचितपूर्वं साधुं दृष्ट्वा स्खलद्गिरा कथं कथमपि मातुः दुरवस्थां वर्णितवान् च । करुणान्तरङ्गः सः साधुः झटिति एव तस्य अङ्गुलिं गृहीत्वा तद्गृहाभिमुखं प्रस्थितः ।

यदा ताभ्यां गृहं प्राप्तं, डेबोरायाः स्थितिः विषमतां गता आसीत् । सा निरन्तरं कासते स्म । रक्तबिन्दवः केचन दृश्यन्ते स्म तस्याः ओष्ठयोः । साधुः सुदीर्घकालं यावत् तस्याः प्रकोष्ठे एव आसीत् । तेन नैकविधाः उपचाराः कृताः । ततः प्रस्थानात्पूर्वं बेन्यहूदेन सह अपि सः फ्रेञ्च्भाषया विस्तरेण वार्तालापं कृतवान् ।

"तात ! किमुक्तं तेन ... ?" – तस्य गमनानन्तरम् अपृच्छत् बेन्झियोनः ।

"सः मां निमन्त्रयति तस्य वसतिं प्रति । वदति च, तत्रैव शब्दकोष-निर्माणकार्यं करोतु इति । पश्य, सः नास्ति यहूद्यः । तथापि अवगच्छति मां, मम लक्ष्यं च । परन्तु मदीयाः एव माम् एवं तिरस्कुर्वन्ति ... ! - विषादेन उक्तवान् बेन्यहूदः ।

"शिशोः अम्बायाश्च विषये किम् उक्तं तेन ... ?"

"शिशोः विषये अधुना किमपि वक्तुं न शक्यम् इति ।"

"अम्बायाः ... ?"

"सापि नितराम् अशक्ता अस्ति वत्स ! वैद्यः अभिप्रैति यत् तया सुदीर्घकालं यावत् शय्याविश्रान्तिः स्वीकर्तव्या इति । तन्मध्ये तस्याः कासोऽपि आरब्धः अस्ति । अत्र न किमपि तथा चलति यथा वयं चिन्तयामः । बहुवर्षेभ्यः पूर्वं वैद्यः मां सूचितवान् आसीत् यत् मम जीवितावधिः ततः वर्षं यावत् इति । परन्तु अहम् अधुनापि जीवामि, कार्यं

करोमि च । मम सम्पर्कात् सुदृढा अपि तव माता कासपीडिता जाता । मदपेक्षया दुर्बला सा अद्य । हन्त ! विधिविलसितमेतत् !''

''तन्नाम किं भवान् अभिप्रैति यत् अम्बा न जीविष्यति इति ... ?'' दिग्भ्रान्त्या पृच्छतः बेन्झियोनस्य नेत्रयोः अश्रुधारा निर्गता ।

''न तथा वत्स ! परन्तु वैद्यः वदति यत् हेमन्तकालेऽस्मिन् शैत्यं सोढुं न शक्नोति सा । अतः अस्माभिः मासद्वयं यावत् जेरूसलेंनगरं विहाय अन्यत्र गन्तव्यम् इति । जाफ्फानगरं गन्तव्यं भवेत् अस्माभिः ।''

''तात ! बहिः कः सः कोलाहलः ... ? किं भवान् अपि शृणोति... ?'' तदा अकस्मात् प्रकोष्ठं प्रविष्टः अविचायिलः पितरम् उद्दिश्य उक्तवान् ।

सत्यम् । बहिः महान् कलकलध्वनिः श्रूयते स्म । अश्वानां खुरपुटध्वनिः, हेषारवश्च श्रुतिपथम् आगतः ।

''वत्स ! शीघ्रं धाव । प्राकारद्वारं पिधेहि । अविचायिल ! सर्वाणि अपि वातायनानि पिधेहि'' – बेन्यहूदः सम्भ्रमेण पुत्रौ आज्ञापितवान् ।

''तात ! किमेतत् प्रवर्तते ?'' – भीत्या अपृच्छत् बेन्झियोनः ।

''मन्ये अपरा नूतना काचित् विपत् समुपस्थिता ... ।''

झटिति प्राकारद्वारं पिधाय अन्तः आगतः बेन्झियोनः अवदत् – ''तात ! विंशत्यधिकाः अश्वारोहिणः दृश्यन्ते तत्र । भासते यत् ते अस्माकं गृहमेव आगताः । परन्तु न ते अस्माकं वैरिणः इव भान्ति । यतः तैः यत् वस्त्र-फलकं गृहीतं तत्र लिखितम् अस्ति 'इस्त्रेलीयसैन्यम्' इति ।''

बेन्यहूदः कुतूहलेन गृहाङ्गणं गत्वा प्रकारात् बहिः दृष्टिं प्रसारितवान् । सत्यं, विंशत्यधिकाः युवानः तत्र आसन् । सर्वे अरब्बीयवेषभूषालङ्कृताः आसन् । बेन्यहूदम् अभिज्ञाय ते अवदन् – ''गुरो ! बेन्यहूद ! वयं भवतः रक्षार्थम् आगताः ... ।''

''परन्तु के भवन्तः ... ? कुतः आगताः ... ?''

''वयं सर्वे कृषिकाः । आत्मानम् इस्त्रेलीयसैनिकान् मन्यमानाश्च । समीपस्थेभ्यः विभिन्नग्रामेभ्यः नगरेभ्यश्च समागताः वयम् । भवतां बहिष्कारवार्ता अस्माभिः श्रुता । अतः भवतां रक्षणाय एव वयम्

आगताः....।"

"एवम् ... !!!"

सन्निहिता विपत् दुःस्वप्नः इव अपसृतः आसीत् । बेन्यहूदस्य अन्तःकरणं भावपूर्णं जातम् ।

रक्षकाणाम् आगमनवार्ता दावाग्निरिव नगरे झटिति प्रसृता । 'न केवलं तावन्तः, अन्येऽपि सन्तीति श्रूयते बेन्यहूदस्य शिष्याः ... ।' जेरूसलेंनगरीयाः सहसा बेन्यहूदपरिवारोपरि आरोपितां बहिष्काराज्ञां प्रतिस्वीकृतवन्तः । अधुना सर्वेऽपि यहूद्याः तैः सह सँलपन्ति, तदपि प्रेम्णा । डेबोरायाः योगक्षेमं विचारयितुं प्रतिगृहं जनाः आगताः । जातस्य नूतनस्य शिशोः निमित्तं दुग्धस्य अन्यविधस्य आहारस्य च महापूरः एव आगतः । क्रमेण सः शिशुः स्वस्थतां प्राप्नोत् । विगतचिन्ता डेबोरा अपि पूर्वतनीं स्थितिं प्राप्तवती ।

"किं नाम भवतु अस्याः ... ?" बेन्यहूदः कदाचित् पृष्टवान् ।

"एषा अस्माकं जीवने शान्तिम् आनीतवती । अतः अस्याः नाम श्लोमिट् (शान्तिः) इत्येव भवतु" - डेबोरा अवदत् ।

स्वजीवने एतावता शान्तिः प्राप्ता इति विषये बेन्यहूदस्य इतोऽपि विश्वासः न आसीत् । 'भवितुम् अर्हति एषा कदाचित् युद्धात् पूर्वतनी शान्तिः ... !' सः अचिन्तयत् । तथापि डेबोरायाः अभिप्रायं सः अङ्गीकृतवान् । तस्याः 'श्लोमिट्' इत्येव नामकरणं कृतम् ।

* * *

# १०. अहं पराजितः !

डेबोरायाः स्वास्थ्यलाभाय हेमन्तकाले मासद्वयं यावत् अन्यत्र वासः करणीयः इति वैद्येन परामर्शः दत्तः आसीत् । अतः बेन्यहूदः सपरिवारं जाफ्फानगरगमनं निश्चितवान् । तावत्पर्यन्तं पत्रिकायाः सम्पादनस्य मुद्रणस्य च उत्तरदायित्वम् अत्यन्तम् आत्मीयेभ्यः सहकारिभ्यः समर्पितवान् । पत्रिकायाः स्वरूपे विषयवस्तुनि वा न किमपि परिवर्तनं करणीयम् इति तान् आदिष्टवान् अपि । स्वयं च प्रवासावसरेऽपि शब्दकोषनिर्माणकार्यम् अनुवर्तयितुं शक्नोमि इति तस्य विचारः आसीत् । प्रयाणसन्नाहः आरब्धः । कश्चन उत्तमः अश्वशकटः भाटकाय गृहीतः । अपेक्षितानि वस्तूनि संगृहीतानि । सर्वेषां कृते उष्णवस्त्राणि आहारपदार्थाश्च सज्जीकृताः । सन्नाहं दृष्ट्वा एव बेन्झियोनः रोमाञ्चितः जातः । प्रस्थानमुहूर्तमेव निरीक्षमाणः आसीत् सः । नितरां व्यग्रः अपि बेन्यहूदः पत्न्याः स्वास्थ्यलाभमेव मनसि निधाय कथमपि एतदर्थं मनः सज्जीकृतवान् आसीत् । सोऽपि अधुना सामान्यः गृहस्थः इव व्यवहरन् आसीत् ।

कस्मिंश्चित् सुखमये सुप्रभाते ते जेरूसलेंनगरतः प्रयाणम् आरब्धवन्तः । बालाः नितराम् आनन्दिताः आसन्, विशेषतया बेन्झियोनः । शिशुम् अङ्के निधाय शकटे उपविष्टा आसीत् डेबोरा । येमिमा पितुः हस्तं गृहीत्वा तत्पार्श्वे उपविष्टा । अविचायिलेन सह बेन्झियोनः चालकस्य पृष्ठभागे एव उपविष्टः । प्रतिपदं सः 'तत् किम् ? एतत् किम् ?' इति पृच्छन् एव भवति । सः शाकटिकः अपि स्नेहेन एव तस्य प्रश्नानाम् उत्तरं वदति स्म ।

न केवलं दिने, रात्रौ अपि प्रयाणम् अनुवृत्तम् । मध्ये मध्ये किमपि गायन् सः शाकटिकः अश्वान् चोदयति स्म । तन्मध्ये पुरस्तात् आगच्छन् उष्ट्रयूथः कश्चन तैः दृष्टः । शाकटिकस्य शङ्का आसीत् यत् ते च अरब्बीयाः जनाः अस्मान् पीडयेयुः इति । यतः पूर्वमपि तादृशः अनुभवः तेन प्राप्तः आसीत् । परन्तु न किमपि तादृशं प्रवृत्तम् । शाकटिकः शकटम् अग्रे अनयत् ।

ततः किञ्चिद्दूरगमनानन्तरं बेन्झियोनः लक्षितवान् यत् त्रयः अरब्बीयाः अश्वारोहिणः शकटम् अनुसरन्तः सन्ति इति । सः तदेव पितरम् उक्तवान्। सोऽपि पृष्ठतः अपश्यत् । सत्यमेव, अनुसर्तारः त्रयः अपि भुषुण्डिधारिणः। सः शाकटिकम् आदिष्टवान् - "शीघ्रं वाहयतु शकटम् । अश्वान् चोदयतु.... ।" शाकटिकः कशाघातेन अश्वान् प्रेरितवान् । ते वेगेन अधावन् । तथापि पञ्चनिमेषाभ्यन्तरे ते अश्वारोहिणः शकटसमीपम् आगताः एव । 'किं ते अस्मान् मारयेयुः ... ?'

"परन्तु तात.., सः लोलिकः खलु.. ?" - बेन्झियोनः तेषु अश्वारोहिषु अन्यतमम् अभिज्ञाय अवदत् ।

"सत्यं, सः एव .. ।" - समीपम् आगतवन्तं तम् अभिज्ञाय बेन्यहूदः उक्तवान् । लोलिकः तेषां नायकः आसीत्, ये केभ्यश्चित् दिनेभ्यः पूर्वं तस्य परिवारस्य रक्षणाय आगताः आसन् ।

"मित्र .. ! कथं भवान् अत्र .. ?" - सः कुतूहलेन पृष्टवान् ।

"भवतां प्रयाणवार्ता श्रुता । अस्य मार्गस्य क्लेशबहुलत्वं वयं जानीमः। अन्यच्च वयमपि जाफ्फनगरनिवासिनः एव । अधुना तत्रैव गच्छामः । मार्गे भवतां रक्षणमपि कृतं भवतीति मत्वा प्रस्थिताः स्मः.. । अरब्बीयानां मध्ये क्लेशः मा भवतु इति तेषां वेषः धृतः.. ।"

तस्य मुखात् विवरणं श्रुत्वा नितरां सन्तुष्टः बेन्यहूदः । तस्य परिवारस्य सर्वेषामपि सदस्यानाम् आत्मीयः आसीत् लोलिकः । "अयि प्रजावति ! अपि कुशलम्... ? कथमस्ति प्रयाणम्... ?" सः डेबोराम् अपि अपृच्छत् ।

"स्थितेषु भवादृशेषु का चिन्ता ! सर्वं कुशलमेव" - सा उवाच । सर्वेभ्योऽपि अधिकं सन्तुष्टः आसीत् बेन्झियोनः । अश्वारोही भुषुण्डिधारी च लोलिकः नितराम् आकर्षकः आसीत् । गते मासे तस्य निकटमैत्री अपि तेन प्राप्ता आसीत् । सर्वदा तं कथानायकमिव आराधनाभावेन पश्यति स्म बेन्झियोनः ।

"तात.... ! अहमपि लोलिकेन सह अश्वोपरि उपविशामि । कृपया अनुमन्यताम्.." - सः पितरं प्रार्थितवान् ।

"मास्तु वत्स ! तस्य कष्टं भवेत्..." – सः पुत्रं निवारयितुम् ऐच्छत् ।

"न किमपि कष्टम् । सः आगच्छतु नाम..." – लोलिकः अवदत् ।

बेन्झियोनः आनन्देन अश्वम् आरूढवान् । स्वस्य पुरतः एव तम् उपवेश्य सः यथा न पतेत् तथा गृहीत्वा अश्वं चोदितवान् लोलिकः । रोमाञ्चितं तम् उक्तवान् च – "मास्तु भयम् । भवन्तमपि अहम् उत्तमम् अश्वारोहिणं करिष्यामि... ।" तस्य हस्तेन एव खलीनं ग्राहयित्वा अश्वम् अग्रे प्रेरितवान् सः ।

"वेगेन गच्छाव । इतोऽपि वेगेन ..." – बेन्झियोनः हर्षातिरेकेण अवदत् ।

"गच्छाव । परन्तु शकटस्य रक्षणाय अस्माभिः तस्य पृष्ठतः एव भवितव्यं खलु.." लोलिकः तं स्मारितवान् । तथापि मध्ये मध्ये सः तं किञ्चिद्दूरम् अग्रे नयति स्म । अविस्मरणीया यात्रा एषा आसीत् बेन्झियोनस्य ।

* * *

जाफ्फानगरम् अस्ति समुद्रतीरे । पूर्वं कदापि समुद्रः न दृष्टः आसीत् बेन्झियोनेन । तस्य प्रथमदर्शनादेव सः नितराम् आकृष्टः समुद्रेण । तस्य अगाधता, विशालता, तरङ्गगर्जनं, तदुपरि प्लवमानाः नौकाः – इत्यादिभिः सः व्यामुग्धः जातः ।

जाफ्फानगरे बहवः यहूद्याः आसन् । तेषु अनेके बेन्यहूदस्य अभिमानिनः एव । ते तं परिवारं सहार्दं स्वागतीकृतवन्तः । तस्य आवासादिव्यवस्थानिमित्तम् अपि साहाय्यम् अकुर्वन् ते । किञ्चन लघु गृहं भाटकनिमित्तं गृहीतम् । तत्र वस्तूनि व्यवस्थितं योजयित्वा डेबोरा पाककार्ये मग्ना अभवत् । बेन्यहूदः पुनः पुनः तत्रत्यैः जनैः मिलन् तेषामपि प्रेरणां वर्धयति स्म । कोषनिर्माणकार्यं तत्रापि सः अनुवर्तितवान् ।

जाफ्फानगरस्य सुखमये वातावरणे बालाः नितरां सन्तुष्टाः आसन् । तत्रापि विशेषेण बेन्झियोनः । लोलिकेन सह तस्य मैत्री अवर्धत । लोलिकः कुशलः अश्वारोही यथा तथैव नाविकः अपि । तदीयः एव लघुः पोतः

अपि आसीत् । समुद्रप्रियः बेन्झियोनः प्रतिदिनमिव लोलिकेन सह समुद्रविहारं कर्तुम् आरब्धवान् । 'अहमपि उत्तमः नाविकः भवेयम्' इति विचारः तस्य मनसि उत्पन्नः । लोलिकः अपि तं प्रोत्साहयति स्म । तौ द्वौ अपि प्रतिदिनं पोतेन समुद्रे किञ्चिद्दूरं यावत् विहारार्थं गच्छतः । कदाचित् सुदूरमपि ।

जाफ्फानगरे बहवः अरब्बीयाः निवसन्ति स्म । नौका एव तेषां जीविकोपायः आसीत् । लघुपरिमाणकाः उडुपाः, मध्यमपरिमाणकाः पोताः, बृहत्यः नौकाश्चापि तेषां भवन्ति स्म । अबुहमीसः तादृशः कश्चन नाविकः यस्य आधीन्ये अनेके उडुपाः, पोताः, द्वित्राः नौकाश्च आसन् । लोलिकद्वारा बेन्झियोनः अबुहमीसस्य परिचयं प्राप्तवान् । बेन्झियोनः यद्यपि बालः तथापि तस्य जिज्ञासया नितरां सन्तुष्टः अभवत् अबुहमीसः । सः तं स्वीयया अरब्बीभाषया समुद्रयानस्य आकर्षिकाः कथाः कथयति स्म । अधुना बेन्झियोनः अरब्बीभाषामपि जानाति स्म । अतः अबुहमीसस्य कथाः तदेकचित्ततया सः शृणोति स्म । ताः श्रुत्वा श्रुत्वा तस्य मनसि अबुहमीसः कश्चन महान् नायकः इव चित्रितः अभवत् ।

कदाचित् लोलिकेन सह पोतेन समुद्रविहारं कुर्वन् आसीत् बेन्झियोनः । तद्दिने ताभ्यां समुद्रमध्ये किञ्चित् अधिकदूरमेव गतम् आसीत् । वार्तालापमग्नाभ्यां ताभ्यां कियद्दूरं गतम् इत्यपि न ज्ञातम् । तन्मध्ये अकस्मात् आकाशे कृष्णाः मेघाः दृष्टाः । "बेन्झियोन ! वृष्टिः भविष्यति । झटिति प्रतिनिवर्तितव्यम्" – लोलिकः अवदत् ।

चण्डमारुतः इव वायुः महता वेगेन अवहत् । सः दूरात् दृष्टवान् यत् अन्येऽपि नाविकाः अपायसूचनां प्राप्य शीघ्रं प्रतिनिवर्तमानाः सन्ति इति । सः प्रयत्नेन पोतस्य दिक्परिवर्तनं कर्तुम् ऐच्छत् । परन्तु हा हन्त ! महान्तः तरङ्गाः तस्य प्रयत्नं विफलम् अकुर्वन् । ते पोतं विरुद्धदिशमेव नयन्ति स्म ।

"बेन्झियोन ! जागरूकः भवतु । दृढं गृह्णातु" इति वदन् लोलिकः पोतस्य चालनचक्रं हस्ताभ्यां दृढं गृहीत्वा पूर्णां शक्तिम् उपयुज्य तत् वर्तयितुं प्रयत्नम् अकरोत् । परन्तु तदैव आगतः कश्चन महान् तरङ्गः पोतमपि प्रविश्य लोलिकं तथा अघट्टयत् येन सः चक्रमपि परित्यज्य अधः न्यपतत् ।

 

व्रणितश्च अभवत् । पोतस्य अन्तः अपि जलं प्राविशत् एव । "लोलिक ! अधुना किं भविष्यति ... ? आवां जीवाव खलु ... ?" – बेन्झियोनः सम्भ्रमेण अपृच्छत् ।

"मास्तु चिन्ता । सर्वं सुष्ठु भविष्यति । देवं ध्यायतु..." इति यद्यपि उक्तवान् लोलिकः, तथापि तस्य मनः अपायमेव शङ्कते स्म । इदानीं कथं प्रतिनिवर्तनीयम् इति सः न ज्ञातवान् । मध्ये मध्ये पोतमपि प्रविशन्तः तरङ्गाः तस्य अन्तः जलं पूरयन्ति स्म ।

"लोलिक ! पुनः न कदापि समुद्रयानं करोमि अहम् ..." – भीत्या उच्चैः अवदत् बेन्झियोनः । तस्य शरीरं तीव्रं कम्पते स्म ।

"बान्झियोन ! चिन्तां न करोतु । किमपि न भविष्यति" – लोलिकः उवाच । तावता अपरा काचित् नौका तत्समीपम् आगता । ताम् अभिज्ञाय आनन्देन उक्तवान् बेन्झियोनः – "सा अबुहमीसस्य नौका... !"

"आम् । मन्ये आवयोः रक्षणार्थमेव सः आगतः.. ।"

तावता सा नौका समीपम् आगता । पोतस्य समीपे एव ताम् आनीय स्वस्य दीर्घौ हस्तौ प्रसार्य अबुहमीसः तत्र कम्पमानं बेन्झियोनम् उन्नीय स्वनौकां प्रापितवान् । तेन क्षिप्तां रज्जुं गृहीत्वा लोलिकः अपि नौकां प्राप्तवान् । द्वयोरपि शरीरं पूर्णतया क्लिन्नम् आसीत् । वृष्टिलग्नः कपोत-शावकः इव बेन्झियोनः कम्पते स्म । मुखेन दन्तवीणां वादयति स्म सः । अबुहमीसः उष्णवस्त्रेण तम् आच्छादितवान् । तीरं प्राप्य झटिति तं हस्ताभ्याम् उन्नीय एव गृहं प्रापितवन्तौ लोलिक-अबुहमीसौ । तावता बेन्झियोनस्य शरीरं नितराम् उष्णम् आसीत् । ज्वरग्रस्तं तं शाययित्वा डेबोरा तयोः धन्यवादम् अर्पितवती । किञ्चित्कालानन्तरं तौ प्रतिनिवृत्तौ ।

रात्र्या सह बेन्झियोनस्य ज्वरः अपि अवर्धत । डेबोरया वैद्यः आनीतः । सः बेन्झियोनं परिशील्य औषधं दत्तवान् । तावता बेन्यहूदः अपि गृहं प्राप्तवान् । मध्यरात्रपर्यन्तं तत्रैव स्थितः वैद्यः ततः प्रस्थानं कुर्वन् उक्तवान् – "प्रतिघण्टम् औषधं दातव्यम् । अहं प्रातः आगत्य द्रक्ष्यामि ।"

आरात्रि डेबोरा पुत्रस्य पार्श्वे एव उपविष्टा आसीत् । तस्य तप्ते ललाटे

आर्द्रवस्त्रं स्थापयन्ती मध्ये मध्ये पानीयं पाययन्ती, तस्य शरीरं मार्जयन्ती च आसीत् सा । उषःकाले बेन्यहूदः तां विश्रान्त्यर्थं प्रेषयित्वा स्वयं च पुत्रस्य पार्श्वे उपविष्टवान् ।

"डेबोरे, डेबोरे... ! झटिति अत्र आगच्छतु" – पञ्चनिमेषाभ्यन्तरे एव सः उच्चैः आहूतवान् ।

"किम् अभवत्... ?" – धावन्ती समीपम् आगता डेबोरा ।

"पश्यतु... । सः निद्रायां किमपि वदन् अस्ति..." पुत्रं दर्शयन् उक्तवान् बेन्यहूदः ।

तस्यामपि अवस्थायां हासः आगतः डेबोरायाः । "अस्वस्थाः जनाः एवम् उत्स्वप्नवचनानि वदन्ति एव । तत्र को विशेषः.... ?" – सा अवदत् ।

"परन्तु डेबोरे ! शृणोतु, तस्य वचनं सावधानं शृणोतु... ।"

सा कर्णं तस्य मुखसमीपं नीत्वा श्रुतवती । बेन्झियोनः अराबिक्भाषया शनैः किमपि वदन् आसीत् ।

"श्रुतम्... ! भवत्याः प्रियपुत्रस्य वचनानि श्रुतानि... ! द्विसहस्रवर्षाणाम् अनन्तरं जातः सर्वप्रथमः हीब्रूशिशुः ज्वरितावस्थायाम् अराबिक्भाषया वदति, न तु हीब्रूभाषया... ! डेबोरे ! मम सर्वोऽपि प्रयत्नः विफलः जातः । अहं पराजितः.... । अहं पराजितः... !!"

उद्वेगवशात् कम्पमानः आसीत् बेन्यहूदः । पुत्रः शुश्रूषणीयः, उत पतिः सान्त्वनीयः इति अजानती दिङ्मूढा इव स्थितवती डेबोरा ।

* * *

# ११. प्रतीकारः पितरमुद्दिश्य

कष्टेनैव अतीता सा रात्रिः । बेन्यहूदस्य उद्वेगः नैव शान्तः । प्रातःकाले तं समादधती डेबोरा उक्तवती – "प्रिय ! किमर्थं वृथा चिन्तयति भवान् ? एतादृश्यां ज्वरितावस्थायां कस्यापि जनस्य बुद्धिः स्ववशे न भवति । बेन्झियोनः स्वयमेव न जानाति स्म यत् अहम् अराबिक्भाषया वदामि इति । जाग्रदवस्थायां तु तेन हीब्रूभाषया एव खलु कथ्यते ..!"

"अतः एव खलु मम चिन्ता ! पुत्रः जाग्रदवस्थायां हीब्रूभाषया वदति, स्वप्नावस्थायां च अराबिक्भाषया.... । अस्य कः अर्थः... ? सः प्रज्ञापूर्वकं यत्नेन हीब्रूभाषया वदति । प्रज्ञायां सुप्तायां तु अन्तरङ्गे सः एतां भाषां नेच्छति, द्विषति वा । अत एव तदा तस्य मुखात् अन्या भाषा निस्सरति ! हन्त ! एषु वर्षेषु सर्वैः मेलितुं तस्मै अवसरं कल्पयता मया दोषः कृतः । कुमित्रैः तस्य अन्तरङ्गं दूषितं कृतम् । वयं शीघ्रमेव जेरूसलेंनगरं प्रतिगच्छाम । अहं पुनरपि बेन्झियोनं तादृशे परिवेषे वर्धयामि यत्र सः हीब्रूभाषामेव शृणुयात्.... ।"

अधुना तु निरुत्तरा जाता डेबोरा ।

* * *

त्रिचतुरैः दिनैः क्रमशः स्वस्थतां प्राप्नोत् बेन्झियोनः । कदाचित् मातुः मुखात् 'शीघ्रमेव अस्माभिः प्रतिनिवर्तितव्यम्' इति श्रुत्वा विस्मितः सः अवदत् – "परन्तु अम्ब ! अस्माकं पूर्वयोजना आसीत् यत् अत्र मासद्वयं स्थास्यामः इति । एतावता मासोऽपि न अतीतः... । अत्र आनन्देन स्मः । किमर्थम् अधुनैव प्रतिगन्तव्यम्.... ?"

"तत्तु सत्यमेव वत्स ! परन्तु सः भवतः पितुः निर्णयः.... ।"

"अहं जानामि तस्य एव निर्णयः इति । सः सर्वदा सर्वाधिकारी इव व्यवहरति । स्वस्मै यत् रोचते तदेव आचरति । अन्येषु आरोपयति च... ।"

बेन्झियोनः जानाति स्म यत् 'पितुः निर्णयं न कदापि विरोद्धुं शक्नोति

माता । स्वस्य विरोधस्य तु गणना एव न भवति' इति ।

गमनदिनमपि निर्णीतम् । वस्तूनां बन्धनमपि आरब्धम् । तत्पूर्वदिने मातरम् अपृच्छत् बेन्झियोनः - "गमनं निर्णीतमेव । भवतु नाम । अद्य अन्तिमवारं मम मित्रैः मिलित्वा आगच्छानि वा ?"

"अस्तु वत्स ! परन्तु विलम्बं न करोतु । यतः भवान् जानाति यत् मित्रैः सह अरब्बीभाषया भाषमाणं भवन्तं पिता न सहते" इति डेबोरा उक्तवती ।

"अस्तु" इति कथयित्वा ततः प्रस्थितवतः बेन्झियोनस्य मनसि विचारः आगतः यत् 'यत्नेन वा कदाचित् मया पितुः सर्वाधिकारप्रवृत्तिः विरोद्धव्या' इति । समुद्रतीरं प्राप्तवन्तं तं दृष्ट्वा नितरां हृष्टः अभवत् अबुहमीसः । लोलिकोऽपि तत्रैव आसीत् । तयोः मनसि तु महती चिन्ता आसीत् बेन्झियोनस्य स्वास्थ्यविषये । ताभ्याम् अन्यैः अपि मित्रैः मिलित्वा सुदीर्घं कालं यापितवान् बेन्झियोनः । "मित्र ! भवतः स्वस्थताप्राप्तिं निमित्तीकृत्य अहं विशेषकार्यक्रमम् आयोजयिष्यामि । आगामिभानुवासरे वयं समुद्रविहारं करिष्यामः" अबुहमीसः अवदत् ।

"परन्तु अहं नागमिष्यामि" - बेन्झियोनः विषादेन अवदत् ।

"किमर्थम् ? समुद्रविषये भीतिः उत्पन्ना वा ?" - लोलिकः पृष्टवान् ।

"नैव ... । श्वः एव वयं जेरूसलें प्रति प्रस्थानं करिष्यामः ...."

"कथम्... ? पूर्वं तु भवता उक्तमासीत् यत् 'वयं मासद्वयम् अत्र स्थास्यामः इति... ।" - कश्चन जिज्ञासया पृष्टवान् ।

"सत्यं, पूर्वं तु तथैव निश्चितम् आसीत् । परन्तु अधुना मम पिता निर्णीतवान् अस्ति यत् श्वः एव प्रस्थातव्यम् इति ।..."

"किमर्थं तादृशः निर्णयः....?"

"भगवान् एव जानाति । अहं तु न जानामि यत् सः कदा कीदृशं निर्णयं करोति इति । तेन निर्णीतम् अस्माभिः विना प्रतिवचनम् अनुसर्तव्यं, तावदेव" - बेन्झियोनः असमाधानेन उक्तवान् ।

तस्य वचनं श्रुत्वा तेषां बालानां मध्ये कश्चित् उक्तवान् - "सत्यं, मम पिता वदति स्म यत् भवतः पिता अत्यन्तं विलक्षणः । सः स्वस्मै यत् रोचते

तदेव करोति इति... ।"

"न केवलं तावत्, मम पिता मम मातरं वदति स्म यत् सः महान् हठी, दुराग्रही च अस्ति इति....." - अपरः बालः उवाच ।

बेन्झियोनस्य मनसि पितुः विषये यत् असमाधानम् आसीत् तस्य एव वाक्यरूपं यच्छन्ति स्म ते बालाः ।

"ह्यः मम माता पितरं वदति स्म यत् सः श्रीमतां परिवारे जातां सुखेन प्रवृद्धां कोमलाङ्गीं तव मातरं राक्षसः इव क्लेशितवान् इति... ।" अन्यः बालकः उक्तवान् ।

तदपि पूर्णं सत्यमेव इति चिन्तितवान् बेन्झियोनः । अन्यः अपि बालः उक्तवान् - "मम पिता वदति स्म यत् सः असम्भाव्यमेव किमपि साधयितुं प्रयतमानः स्वस्य जीवनं तु नाशितवान् । अन्यान् अपि नाशयति । स्वयं नष्टः परान् नाशयति इति ... !"

"हन्त ! किं कर्तुं शक्यते ... । तर्हि अद्यैव आप्रष्टव्यः भवान्" इत्युक्त्वा अबु-हमीसः तं विषयं तत्रैव समापितवान् । ततः अपि अर्धघण्टां यावत् तत्रैव स्थित्वा ताभ्याम् आपृष्टः सन् स्वगृहदिशि यदा प्रस्थितवान् तदा दशाधिकाः बालाः तम् अनुसृतवन्तः । तेषां गृहाण्यपि नगरमध्ये आसन् । अतः तेऽपि तेन सह आगच्छन् ।

मार्गमध्ये पुनरपि तेषां सम्भाषणम् अनुवृत्तम् । बेन्झियोनं पश्यन् एकः बालः अवदत् - "मम गृहे वदन्ति स्म यत् भवतः गृहे सप्ताहे द्वित्रवारम् उपवासः आचरणीयः भवति इति । किं तत् सत्यम्... ?"

सत्यमपि तत् कथम् अङ्गीकुर्यात् सः बालः ! "भवतः माता तदा तदा तीव्रम् अस्वस्था भवति इति । तत्रापि भवतः पितुः दुर्व्यवहारः एव कारणम् इति मम गृहजनाः परस्परं भाषन्ते स्म ।"

"हन्त ! तादृशः धूर्तः वा सः...?" कश्चन आश्चर्येण पृष्टवान् ।

"अथ किम् ? रात्रिंदिवं हीब्रूजपं कुर्वन् सः पत्नीपुत्रादयः जीवन्ति वा इत्यपि न विचारयति..।" इत्युक्त्वा ततः अग्रे योजितवान् सः बालः - 'अहं न जानामि, मम पित्रा मातरम् उद्दिश्य एवम् उक्तम्...!"

सर्वमपि एतत् शृण्वतः बेन्झियोनस्य अन्तरङ्गं क्वथत् इव आसीत् ।

"धूर्तं भवतः पितरम् उद्दिश्य प्रतीकारः कुतः न करणीयः...?" - कश्चन बालः पृष्टवान् ।

"सत्यं खलु ..? किमर्थं सर्वं सहते भवान् ? कुतः प्रतीकारः न करणीयः ..?" - अन्यः तस्य समर्थनं कृतवान् ।

"सत्यं, मया प्रतीकारः कर्तव्यः । धूर्तः मम पिता विरोद्धव्यः मया । अद्यैव... अधुनैव..." - बेन्झियोनस्य मुखात् वाक्यं निर्गतम् ।

"कुतो विलम्बः... ? वयं सर्वे भवत्पक्षे स्मः एव ..." - ते अघोषयन् ।

बेन्झियोनापेक्षया त्रिचतुरवर्षेभ्यः ज्येष्ठाः अपि बालाः तत्र आसन् । तेषां तु तद्विषये महती आसक्तिरपि आसीत् ।

"तदागमनमार्गम् अवरुद्ध्य तिष्ठाम वयम् । दूरात् अण्डादिकं तदुपरि क्षिपामः" - अन्यः उपायं सूचितवान् ।

"सत्यं, तथैव करवाम । अर्धघण्टानन्तरं सः एतेनैव मार्गेण आगच्छति । तावता सज्जाः भवाम" - बेन्झियोनः अवदत् ।

झटिति ते सर्वे स्वगृहेभ्यः कुक्कुटाण्डानि, दूषितानि शाकानि च संगृहीतवन्तः । यैः तादृशं न लब्धं ते तु लघुशिलाखण्डैः एव स्वकोषं पूरितवन्तः । तावता सन्ध्याकालः सन्निहितः आसीत् । मार्गे एकत्र अन्धकारमयप्रदेशः आसीत् । तत्रैव स्थितं बालानां सैन्यम् । कश्चन उत्साही पार्श्वगृहस्य छदिकाम् आरुह्य ततः एव मार्गं पश्यन् एतेभ्यः निर्देशनं ददाति । किञ्चित्कालानन्तरं दूरात् आगच्छन् बेन्यहूदः तेन दृष्टः । बेन्यहूदः यथापूर्वं चिन्तामग्नः सन् सावधानम् आगच्छन् आसीत् । "सज्जाः तिष्ठन्तु..., आगतः सः धूर्तः...." - सः बालकः उक्तवान् । यदा बेन्यहूदः समीपम् आगतवान् तदा सः आदेशपूर्वकस्वरेण उक्तवान् - "आरभन्ताम्... !"

झटिति चतसृभ्यः दिग्भ्यः अण्डानां शाकानां शिलाखण्डानां च वर्षणं जातं बेन्यहूदस्य उपरि । "अरे, किमिदम् ? किमर्थम् एवं क्रियते... ?" बेन्यहूदस्य प्रश्नः कण्ठे एव स्थितः । बालानां कलकलध्वनिं श्रुत्वा पार्श्वगृहेभ्यः अपि केचन जनाः बहिः आगताः । हन्त ! तेषु गृहेषु स्थिताः बहवः

बेन्यहूदस्य विरोधिनः एव आसन् ।

"बेन्यहूदं बालाः दण्डयन्तः सन्ति । तस्य पुत्रोऽपि अस्ति तस्मिन् गणे । उचितमेव जातम् । अकर्तव्यं यदि क्रियेत तर्हि किमन्यत् सम्भवति...!" कश्चन गृहस्थः अवदत् ।

"भोः हीब्रूपुनरुद्धारक ! मास्तु भवतः सेवा अस्माकं नगरे । निर्गच्छ इतः..." – अन्यः गृहस्थः उक्तवान् । अन्येऽपि केचन तत्र स्वस्वरं योजितवन्तः ।

बालाः तं परितः नृत्यन्तः सरागं गीतम् अगायन् – "धूर्त धूर्त ! निर्गच्छ । मूर्खपितस्त्वं निर्गच्छ !!" अस्त्रक्षेपणं तु प्राचलदेव ।

झटिति बेन्यहूदस्य दृष्टिः गणस्य मध्ये स्थितस्य बेन्झियोनस्य उपरि निपतिता । आश्चर्येण तस्य नेत्रे विस्फारिते । सः झटिति पुत्रस्य समीपं गत्वा तस्य हस्तं गृहीत्वा तम् आकर्षन् इव त्वरितपदैः कथंकथमपि बालसैन्यस्य मध्यतः आत्मानं मोचयित्वा गृहं प्रति अधावत् । गृहं प्राप्य यावत् सः द्वारस्य अर्गलं योजितवान् तावता बेन्झियोनः ज्ञातवान् आसीत् यत् अद्य अन्तिमं युद्धं भविष्यति इति । सः तदर्थं सज्जः एव आसीत् । शिलाप्रतिमा इव पितुः पुरतः तिष्ठन् सः अवदत् – "ताडयतु, बहुधा ताडयतु । यावत् न श्राम्यति तावत् ताडयतु । परन्तु स्मरतु यत् ताडनेन, मम मुखपिधानमात्रेण वा भवान् एतत् सत्यं निगूहितुं न शक्नोति यत् भवादृशः क्रूरः, मूर्खः, पत्नीपुत्रपीडकः वा न कोऽपि अन्यः भवितुमर्हति । लोके सर्वेऽपि भवन्तं द्विषन्ति इति...!!"

बेन्यहूदस्य नेत्रे सङ्कुचिते । सः क्षणं यावत् पुत्रस्य मुखम् इदम्प्रथमतया पश्यन् इव दृष्टवान् । ततः एकं शब्दमपि अनुच्चार्य ततः निर्गत्य स्वप्रकोष्ठं प्रविश्य द्वारं कीलयित्वा छिन्नः कदलीस्तम्भः इव शय्यायां न्यपतत् ।

* * *

विदितवृत्तान्ता डेबोरा नितरां खिन्ना जाता । पुत्रस्य एतादृशः व्यवहारः तस्याः अनिरीक्षितः आसीत् । "वत्स ! पितरम् उद्दिश्य कथम् एतादृशं दुर्व्यवहारम् आचरितवान् त्वम् ? किं त्वं जानासि यत् तव पिता त्वयि कथं स्निह्यति इति... ?" सा तं समादधती पृष्टवती ।

"एतत् सर्वथा असत्यम् । किम् एषोऽपि कश्चन प्रेमप्रकारः....?"

"आं वत्स ! तव पितुः प्रेमप्रकारः भिन्नः एव । त्वं सर्वदा तद्विषये अन्यथा एव गृह्णासि ।"

"किं मिथ्याकथनेन अम्ब ! अधुना अहम् अष्टवर्षीयः । शिशुः नास्मि । ममापि बुद्धिः अस्ति । अहं सर्वम् अवगच्छामि.... ।"

'सत्यं, पुत्रस्य शिशुत्वम् अपगच्छत् अस्ति । अधुना एव तस्य पितुः जीवनलक्ष्यं तत्पुरतः विस्तरेण वक्तव्यम्' इति निश्चित्य डेबोरा उक्तवती - "सत्यं वत्स ! अधुना त्वं सर्वमपि अवगच्छसि । अहमपि अद्य त्वां सर्वमपि वदामि । अधुना भोजनं कुरु । पश्चात् श्रोष्यसि.... ।"

* * *

तस्यां रात्रौ डेबोरा पुत्रं विस्तरेण बेन्यहूदस्य अधुनापर्यन्तं जीवनवृत्तान्तं श्रावितवती । लुझ्कीनगरे लीब्पर्लमन्परिवारे एलिसरस्य जन्म, तस्य पितुः मरणं, मातुलस्य आश्रयप्राप्तिः, पोलाट्स्क्नगरे धर्मशालायां निवासः, तत्र हीब्रूभाषायाः परिचयः, हीब्रूभाषया अनूदितस्य राबिन् सन् क्रूसो-पुस्तकस्य पठनं निमित्तीकृत्य प्राप्तः आश्रयभ्रंशः, ततः ग्लुबोकियानगरगमनं, तत्र योनसपरिवारस्य आश्रयप्राप्तिः, योनसस्य कारणात् हीब्रूभाषाविषये अभिमानोत्पत्तिः, वैद्यकीयशिक्षणाय प्यारिस्गमनं, तत्र अस्वास्थ्यं, यहूद्यसंस्कृतेः पुनरुत्थानाय हीब्रूभाषायाः पुनरपि व्यवहारपथे प्रतिष्ठापनाय च सङ्कल्पः, तन्मध्ये विवाहः, इस्रेल् प्रति आगमनं, हीब्रूमातृभाषिपरम्परायाः पुनर्निर्माणं, पत्रिकायाः आरम्भः, शब्दकोशनिर्माणारम्भः, सर्वेषामपि विरोधं सोढ्वापि तेन क्रियमाणं युद्धं चेति सर्वमपि विस्तरेण वर्णितवती डेबोरा । विस्मयावहम् अद्भुतं किञ्चित् कथानकं शृण्वन् इव सर्वं श्रुतवान् बेन्झियोनः ।

अन्ते च डेबोरा उक्तवती - "वत्स ! अधुना त्वया किञ्चित् वा अवगतं स्यात् पितुः असाधारणं युद्धम् । सत्यम्, अहमपि जानामि यत् सः कदाचित् दुराग्रहं करोति, स्वाभिलषितमेव अन्यैः अपि करणीयम् इति निरीक्षते च इति । परन्तु वत्स ! जानीहि, तत्रापि नास्ति तस्य कोऽपि स्वार्थलेशः । तस्य जीवनस्य एकमेव लक्ष्यं - हीब्रूभाषायाः पुनः व्यवहारभाषाकरणं, तेन

यहूद्यसंस्कृतेः नवोत्थानं चेति । अस्माकं तु एतदेव भाग्यं यत् वयमपि तादृशे पवित्रे कार्ये तस्य सहकारिणः स्मः इति । भविष्यति काले प्रपञ्चः यदा तव पित्रा कृतं तपः ज्ञास्यति, इतिहासकाराः तस्य साहसगाथां लेखिष्यन्ति तदा तत्र सर्वप्रथमस्य हीब्रूमातृभाषिशिशोः तवापि उल्लेखः भविष्यति एव वत्स ! तादृशः भाग्यवान् असि त्वम् । त्वया अद्य यत् कष्टं सह्यते तदेव भविष्यत्काले त्वाम् अजरामरं करिष्यति ।''

स्वपितुः रोमाञ्चकवृत्तान्तं श्रुतवतः बेन्झियोनस्य नेत्रे अश्रुपूर्णे जाते । अन्ते च भरतवाक्यरूपेण इव डेबोरा उक्तवती – ''स्मर वत्स ! तव पिता आत्मबलेन केवलं जीवति । अस्माभिः तस्य आयुः वर्धनीयम् अस्ति । तस्य मनःशान्तिः रक्षणीया अस्ति । तस्य क्रतुशक्तिः वर्धनीया अस्ति । वयं कदापि तस्य सर्जनशक्तेः प्रतिबन्धकाः न भवेम । तस्य मार्गे विघ्नाः न भवेम । त्वमपि मम नाम्ना शपथं गृहाण यत् पुनः कदापि पितुः विषये असमाहितो न भवामि इति । न कदापि त्वया पिता विरोद्धव्यः, न वा निन्दनीयः । किं त्वं प्रियमातुः मम एताम् एकाम् अपेक्षां न पूरयसि... ?'' – डेबोरा भावगद्गदा अभवत् ।

स्वदक्षिणहस्तम् अग्रे प्रसार्य पुत्रस्य दक्षिणहस्तं गृहीत्वा पुनरपि उक्तवती सा – ''वत्स ! प्रतिजानीषे खलु.. ?''

दीनतया याचमानां मातरं पश्यतः बालस्यापि बेन्झियोनस्य अन्तरङ्गं द्रुतम् अभवत् । अष्टवर्षीयः अपि सः बालः अष्टादशवर्षीयः युवकः इव मातरं सान्त्वयन् उक्तवान् – ''तथैव अस्तु अम्ब ! अहं प्रतिजाने.. ।''

तस्यां रात्रौ महता विलम्बेन चेदपि मातापुत्रौ अत्यन्तं निश्चिन्ततया सुखेन च निद्रितवन्तौ ।

* * *

# १२. अर्पितमेतत् जीवनपुष्पम्

बेन्यहूदपरिवारः पूर्वनिश्चितात् दिनात् बहुपूर्वमेव जाफ्फानगरात् जेरूसलेंनगरं प्रत्यागतः। ततः प्रतिनिवृत्ता डेबोरा प्रत्यहं क्षीयमाणा आसीत्। तन्मध्ये सा पुनरपि गर्भिणी जाता। अस्मिन् अवसरे तु तस्याः स्वास्थ्यं नितरां दुर्बलं जातम् आसीत्। सा पुनः पुनः कासते स्म। तत्र रक्तबिन्दवः निपतन्ति स्म। बेन्यहूदस्य क्षयरोगः तस्यां संक्रान्तः आसीत्। एतावता चत्वारि अपत्यानि तया प्रसूतानि आसन्। असकृत् जातैः तैः प्रसवैः तस्याः सर्वापि शक्तिः नष्टा आसीत्। वस्तुतः इदानीं बेन्यहूदस्य आर्थिकस्थितौ काचित् प्रगतिः जाता आसीत्। पत्रिकायाः ग्राहकाणां संख्यापि प्रतिदिनं वर्धमाना आसीत्। तस्य विचाराः अपि बहुभिः अङ्गीक्रियमाणाः आसन्। हीब्रूभाषिणां संख्यापि क्रमशः वृद्धिं गच्छति स्म। तस्य शब्दकोषनिर्माण-कार्यमपि नियतरूपेण प्रवर्तते स्म। परं सुखानुभवयोग्येऽपि अस्मिन् काले गृहिण्याः एव स्वास्थ्याभावात् तस्य गृहस्य सुखप्राप्तिः दूरे एव स्थिता आसीत्।

एषु दिनेषु डेबोरा गृहस्य अन्तः अपि चलितुं कष्टम् अनुभवति स्म। प्रयत्नेन पादम् आकर्षन्ती इव चलन्ती कथमपि गृहकार्याणि निर्वहति स्म सा। प्रसवसमये तु डेबोरायाः तादृशी स्थितिः आसीत् यत् सा सद्योजातां पुत्रीं हस्ताभ्याम् उन्नेतुमपि असमर्था आसीत्।

स्वस्य पञ्चमापत्यस्य तन्नाम तृतीयपुत्र्याः 'अटारा' इति नाम कृतं ताभ्यां, यस्य अर्थः 'मुकुटः' इति। अटारा दुर्बलतमा आसीत्। प्रसवानन्तरं नैकमासान् यावत् डेबोरा शय्यायां शयाना एव भवति स्म। तत्पार्श्वे अटारा। बेन्झियोनः यावच्छक्यं मातुः साहाय्यं करोति स्म। अन्ये तु बालाः आदिनं गृहे कोलाहलं कुर्वन्ति। बेन्यहूदस्तु स्वीये कार्ये एव मग्नः भवति स्म इत्यतः बालानां योगक्षेमद्रष्टा कोऽपि नासीत्। समये स्नान-भोजनादीनाम् अभावेन ते बालाः रुग्णाः इव भान्ति स्म। सतोः अपि

मातापित्रोः ते अनाथाः इव धृतमलिनवेषाः परस्परं कलहायमानाः भवन्ति स्म । सर्वं पश्यन्ती अपि डेबोरा किमपि कर्तुम् अशक्ता आसीत् । सकृत् उत्तिष्ठति चेत् पुनः शयनं यावत् कासः शान्तः एव न भवति स्म तस्याः । अतः सा एषु दिनेषु शय्यातः उत्थानप्रयत्नमेव त्यक्तवती आसीत् ।

बालानां दुरवस्था बेन्यहूदेन अविदिता नासीत् । परन्तु एतदर्थं किं करणीयमिति तस्यापि न स्फुरति । एतादृश्यां दुरवस्थायां तेन स्मृता स्वस्य माता फेगा । 'अधुना सा वृद्धा स्यात् । तथापि यदि सा अत्र आगमिष्यति तर्हि महान् लाभः भवेत्' इति विचिन्त्य बेन्यहूदः तस्मिन् दिने एव स्वमात्रे विस्तरेण पत्रं लिखितवान् । अत्रत्यं सर्वमपि विवृत्य अन्ते सः लिखितवान् – 'कृपया मम साहाय्यार्थम् अविलम्बेन आगच्छतु । यहूद्यानाम् अस्माकं पुण्यभूमौ अस्यां जीवनं भवती अपि इच्छेदेव' इति ।

अल्पेन एव कालेन फेगायाः पत्रम् आगतं यत् सापि आगमने उत्सुका अस्ति इति । मातुः पत्रं पठित्वा बेन्यहूदः निश्चिन्तः सन् निःश्वसितवान् । झटिति रशियातः तस्याः आनयनस्य व्यवस्थां चिन्तितवान् । परन्तु अन्या काचित् नूतना समस्या उपस्थिता । इस्त्रेल्देशे अधुनापि टर्किशासनमेव आसीत् । टर्क-अधिकारिणः एषु दिनेषु कस्यापि यहूद्यस्य प्यालस्टीन्-आगमनाय अनुमतिं न यच्छन्ति स्म । यहूद्याः अत्र आगत्य अत्र निवसतः अरब्बीयजनान् पीडयेयुः इति तेषां भयम् आसीत् । बेन्यहूदः मातुः आनयनाय अनुमतिपत्राय यदा आवेदनम् अकरोत् तदा तैः अधिकारिभिः निस्सङ्कोचं तत् निराकृतम् । षष्ट्यधिकवर्षीया वृद्धा काचित् कथं शासनम् अपकुर्यात् इत्यपि नैव चिन्तितं तैः । बेन्यहूदः निराशः जातः । परन्तु तस्य सुहृदः तं मार्गान्तरम् असूचयन् यत् शासनं यथा न जानाति तथा अनधिकृतरूपेण, तन्नाम अक्रममार्गेण सा आनेतव्या इति । अनिच्छन् अपि बेन्यहूदः तत् अङ्गीकृतवान् ।

ततः तेषां मार्गदर्शनानुसारमेव कयाचित् नौकया प्रयाणं कृत्वा फेगा जाफ्फानगरं प्राप्तवती । तत्र नौकास्थानके प्रतीक्षमाणाः स्थिताः बेन्यहूदस्य सुहृदः तत्रत्येभ्यः कर्मकरेभ्यः भूरि उत्कोचं दत्त्वा तां वृद्धाम् आलुकपूर्णानां गोणीस्यूतानां मध्ये निवेश्य तामपि गोणीस्यूते पूरयित्वा कथमपि नौका-

स्थानकाधिकारिणः वञ्चयित्वा ततः बहिः आनीतवन्तः । नगरमध्ये कस्मिंश्चित् वसतिगृहे तामेव प्रतीक्षमाणः आसीत् बेन्यहूदः । कर्मकराः आलुकपूर्णं स्यूतं (!) स्कन्धेन वहन्तः तत् वसतिगृहं प्रापितवन्तः । बेन्यहूदस्य प्रकोष्ठं प्राप्य यदा तैः स्यूतस्य मुखम् उद्घाटितं तदा शनैः ततः बहिः निस्सृतवती वृद्धा फेगा ! पुरतः स्थितं पुत्रं दृष्ट्वा भावपूर्णा जाता सा । प्रायः विंशति-वर्षात्मकस्य दीर्घकालस्य अनन्तरं पुत्रः दृष्टः आसीत् तया । झटिति अग्रे आगतं तम् आलिङ्ग्य कपोले चुम्बित्वा पृष्टवती सा – "अयि पुत्र ! कथमस्ति भवान् ? अपि कुशलम् ? कथम् एवं कृशः अस्ति.... ?"

परन्तु बेन्यहूदः मौनमेव आश्रितवान् आसीत् । ततः सः हीब्रूभाषया अवदत् – "अम्ब ! पवित्रायाम् अस्याम् इस्रेल्भूम्यां भवत्याः पुत्रः हीब्रूभाषया एव भाषते, न तु अन्यया कयाचिदपि भाषया । क्षन्तव्यः अहम् । यदि मया सह वार्तालापः करणीयः अस्ति तर्हि भवत्या हीब्रूभाषाभ्यासः करणीयः । नान्यः उपायः.." इति ।

तत्र स्थितः कश्चन तत् अनूद्य ताम् अवदत् । मातुः नेत्राभ्याम् अश्रुधारा एव निर्गता । परन्तु सापि बेन्यहूदं विचलितं न अकरोत् । ततः प्रस्थाय ते शकटेन जेरूसलेंनगरम् आगताः । प्रयाणमध्ये विस्मृत्यापि एकमपि शब्दं न उच्चारितवान् बेन्यहूदः !

* * *

वृद्धापि फेगा गृहकार्ये कुशला । सा झटिति गृहव्यवस्थायाः उत्तरदायित्वं स्व्यकरोत् । स्नुषायाः डेबोरायाः पूर्णां विश्रान्तिं कल्पयन्ती सा गृहस्य समग्रमपि कार्यजातं दुर्बलाभ्यामपि स्वीयस्कन्धाभ्यां निरूढवती । उद्वर्तनेन बालाः स्वच्छीकृताः तया । तैललेपनेन तेषां केशाः परिष्कारिताः । क्षालनेन वस्त्राणि निर्मलीकृतानि । तेषां निमित्तं रुचिकरः पाकः कृतः । बहूनां दिनानाम् अनन्तरं तैः बालैः स्वादु भोजनं कृतम् । बालैः सह सम्भाषणे तु तस्याः भाषासमस्या अपि आसीत् । अतः बेन्यहूदः तां हीब्रूभाषां पाठयितुं पुत्रं बेन्झियोनं नियोजितवान् । बालः गुरुः, वृद्धा च शिष्या । षष्टिवर्षीयया वृद्धया तया हीब्रूभाषायाः 'अ आ इ ई' अभ्यासः करणीयः आसीत् ! तथापि सा शुद्धेन मनसा प्रयत्नं तु अकरोत् । बेन्यहूदः अनिच्छन् अपि तस्यै

कश्चित्कालं यावत् पौत्रैः सह रशियन्भाषया भाषितुम् अनुमतिं दत्तवान् ।

अत्रान्तरे डेबोरायाः स्थितिः तु तथा दुरापन्ना आसीत् यत् अधुना गृहकार्येभ्यः मुक्तिः लब्धा चेदपि तस्याः स्वास्थ्यविषये न कोऽपि लाभः जातः । दिनेषु गच्छत्सु सा इतोऽपि अस्वस्था एव जाता । अन्ते च वैद्यस्य सूचनानुसारं चिकित्सालयं प्रवेशिता च । विश्रान्तिः नितराम् अपेक्षिता आसीत् तस्याः । अतः असकृत् बालानां चिकित्सालयगमनमपि वैद्येन प्रतिषिद्धम् आसीत् । अन्यच्च तदीयः क्षयरोगः कदाचित् बालेषु अपि संक्रान्तः भवेत् इति भीत्या वैद्यः आदिष्टवान् आसीत् यत् तया बालानां स्पर्शः अपि न करणीयः इति ! अतः मात्रा मेलितुं चिकित्सालयं गतवद्भिः अपि बालैः मातुः दूरात् दर्शनेनैव सन्तोष्टव्यम् आसीत् । स्तनन्धया अटारा, ततः ज्येष्ठा श्लोमिट् वा किमपि ज्ञातुं न शक्नुतः स्म । येमिमा अविचायिलश्च अधुना मातुः क्लेशं किञ्चिदिव अवगच्छतः । ज्येष्ठः बेन्झियोनः तु सर्वम् अवगन्तुं समर्थः आसीत् । अन्येषां बालानां गमनानन्तरं स्वशय्यायाः पार्श्वे उपविष्टं तं तदा तदा डेबोरा पृच्छति स्म - "वत्स ! आत्मना प्रतिज्ञातं स्मरसि खलु ?" इति ।

प्रायः एकस्य मासस्य अनन्तरं डेबोरायाः चिकित्सालयवासः समाप्तः । तस्याः ततः प्रत्यागमनात्पूर्वं बेन्यहूदः आवासपरिवर्तनं कृतवान् आसीत् । अधुनातनं गृहं पर्याप्तमात्रेण विशालम् सुन्दरम् उद्यानोपेतं च आसीत् । डेबोरायाः जीवनस्य अत्यन्तं शान्तिमयानि दिनानि आसन् तानि । बालाः अपि पितामह्याः लालने नितरां सन्तुष्टाः आदिनम् उद्याने कूर्दन्तः क्रीडन्तश्च कालम् अयापयन् । परन्तु बेन्झियोनस्तु दिनस्य अधिकं कालं मातुः पार्श्वे एव यापयति स्म । प्रायः तस्य अन्तरङ्गं तं वदति स्म यत् 'भवतः माता इतः दीर्घकालं न जीविष्यति' इति !

अतीतानि कानिचन दिनानि । पुनः कस्मिंश्चित् दिने रात्रौ डेबोरा बालान् स्वयमेव भोजितवती । भोजनानन्तरं सर्वान् स्वपार्श्वयोः उपवेश्य सुदीर्घां कथां श्रावितवती । बेन्यहूदेन एव रचितं प्रेङ्खागीतं गायन्ती अटारां येमिमां च शायितवती । सर्वेषामपि बालानां शयनानन्तरमेव स्वयं शयनार्थं गतवती ।

मध्यरात्रे अस्वाभाविकं कञ्चन कोलाहलं श्रुत्वा इव जागरितः अभवत्

बेन्झियोनः । पार्श्वप्रकोष्ठतः मातुः कासध्वनिः श्रूयते स्य । स च प्रतिदिनमिव न आसीत् । अपि तु अत्यन्तं गम्भीररूपेण आसीत् । तन्मध्ये पितामह्याः वचनं श्रुतम् - "वत्से ! सावधानम् । उपविशतु... । किञ्चित् जलं पिबति वा ?" ततः जलपानस्य शब्दः । पुनरपि सुदीर्घः कासः । ततः पतिम् उद्दिश्य अम्बायाः कथनम् - "प्रिय ..! एलिसर ! नाहं जीविष्यामि...। शृणोतु मम अन्तिमं वचनम् .... ।"

"डेबोरे ! तथा न वदतु । अधुना एव वैद्यम् आनयामि । भवती स्वस्था भविष्यति । सर्वं सुष्ठु भविष्यति .... ।" - पितुः वचनं तत् ।

"नैव एलिसर ! .... अहं जानामि । भवान् मम अनुजां पोलाम् आनयतु .... । सा भविष्यति ध्येयमार्गे .... भवतः उत्तमा.. सहचारिणी। मम बालानां च भविष्यति.. प्रेममयी माता .... ।"

"डेबोरे ! किम् एवं वदति भवती ...! किम् अहं तादृशः चपलः.. ?"

"न तथा एलिसर ! .... अहं सत्यमेव वदामि .... । अन्यथा... भवन्तः अनाथाः भविष्यन्ति । अहं तु प्रस्थिता .... ।"

झटिति उत्थाय मातुः समीपं धावितवान् बेन्झियोनः । तं पश्यन्ती एव उक्तवती डेबोरा - "वत्स ! मा विस्मर आत्मना प्रतिज्ञाम् । .... पितुः सहकारी भव .... । शुभं .... भवतु .... ।"

बेन्यहूदस्य अङ्के शिरः निधाय कासमाना अपि सन्तृप्त्या इव शयितवती सा । ततः अल्पेनैव कालेन तस्याः प्राणाः अनन्ते आकाशे विलीनाः अभवन् ! च

श्रीमतां परिवारे जाता, अधीतविद्या, स्वानुरूपं धनिनम् उद्यमपतिं वा पतिं प्राप्तुं योग्यापि सा डेबोरा स्वस्मात् चतुर्भ्यः वर्षेभ्यः न्यूनवयस्कं क्षयरोगपीडितं दुराग्रहवन्तमपि बेन्यहूदं स्वेच्छया परिणीय, कण्टकाकीर्णे तदीये ध्येयमार्गे सहपथिका सती प्रतिपदं तम् अनुसरन्ती तस्य पञ्च अपत्यानि प्रसूय स्वगृहं सर्वप्रथमं हीब्रूमातृभाषिगृहं कृत्वा हीब्रूपुनरुत्थानाभियाने अनितरसाधारणयोगदानं कृत्वा स्वभूमिकां यशस्वितया निरुह्य रङ्गमञ्चात् प्रतिनिवर्तमाना नटी इव इहलोकात् निर्गता आसीत् !

* * *

"वत्स ! समाश्वसिहि । तव अम्बा अस्मान् सर्वान् परित्यज्य गतवती एव । मा रुदिहि... " – पुत्रं समाश्वासयन् उक्तवान् बेन्यहूदः । बेन्झियोनः यद्यपि माता दिवङ्गता इत्येतत् अवगतवान्, तथापि तद्विषये तस्य मनसि स्पष्टता न आसीत् । सः दिङ्मूढः इव जातः आसीत् । अन्ये च बालाः 'माता गतवती' इत्येतत् कथमपि नावगच्छन्ति । पुरतः एव शयानां श्वेतवस्त्रेण आवृतां मातरं तातः 'गतवती...' इति यत् वदति तत् अविचारायिलस्य तु विश्वासार्हमेव नासीत् । "वराकाः एते अनाथाः जाताः" इति दीर्घं निःश्वसितवती फेगा दुःखं कथमपि निगृह्णती । सा रात्रिः अत्यन्तं कष्टेन यापिता सर्वैः ।

प्रातः सर्वप्रथमायाः हीब्रूमातुः शवयात्रा यदा प्रवृत्ता तदा तत्र त्रयः एव आसन् – बेन्यहूदः, बेन्झियोनः, तत्परिवारस्य आत्मीयमित्रं निस्सिं बेहरश्चेति ! बालानां रक्षणाय फेगा अपि गृहे एव स्थितवती ।

श्मशाने प्राप्ते सति बेन्यहूदः ज्ञातवान् यत् यहूद्याः धर्मगुरवः श्मशानस्य अन्तः डेबोरायाः शरीरस्य निखननं कर्तुम् अनुमतिं न यच्छन्ति इति । तत्र कारणम् एवम् आसीत् – 'सा स्वीयान् बालान् हीब्रूभाषां मातृभाषारूपेण पाठयित्वा पवित्रां तां भाषाम् अपवित्रां कृतवती । अतः सापि अपवित्रा जाता । अपवित्रायाः तस्याः पवित्रे श्मशाने स्थलं न दीयते' इति !

तैः धर्मगुरुभिः क्रियमाणाः बहवः अव्यवहाराः बेन्यहूदेन ज्ञाताः आसन् । यहूद्यसंस्कृतिप्रसाराय विदेशेषु निवसद्भिः यहूद्यैः प्रेष्यमाणं धनम् एते स्वलाभाय उपयुञ्जते स्म । तत् स्मरन् बेन्यहूदः गर्जितवान् – "यदि भवन्तः एतत् नानुमन्यन्ते तर्हि श्वः एव भवतां सर्वान् अपि दुर्व्यवहारान् पत्रिकायां प्रकाशयिष्यामि" इति । तस्मात् भीताः धर्मगुरवः अन्ते अनुमतिं दत्तवन्तः ।

सुदीर्घस्य कालस्य अनन्तरं डेबोरां निखाय प्रत्यागच्छतोः तयोः पत्न्या वञ्चितस्य बेन्यहूदस्य दुःखम् अधिकम्, उत मात्रा वञ्चितस्य बेन्झियोनस्य दुःखम् अधिकम् – इति प्रायः श्मशाने शान्ततया शयाना डेबोरा एका एव जानाति स्म !

* * *

# १३. विपदम् अनुवर्तमाना विपत्

डेबोरायाः दिवङ्गमनेन बेन्यहूदस्य गृहम् अनाथमेव जातम् । सा तस्य गृहस्य सर्वस्वमेव आसीत् । बालाः इव बेन्यहूदः अपि तया विना अनाथत्वम् अनुभवति स्म । तथापि सः भूताविष्टः इव आदिनं पत्रिकाकार्ये शब्दकोष-निर्माणकार्ये वा आत्मानं व्यापारयन् दुःखं विस्मरति । परन्तु बालानां तु न तादृशं भाग्यम् आसीत् । ते प्रतिदिनं प्रतिक्षणं मातरं स्मृत्वा दुःखम् अनुभवन्ति स्म । "अम्बा कुत्र गता ? कदा आगमिष्यति ?" इति पितामहीं दिने शतवारं पृच्छन्ति स्म ते । "सा उपरि गता अस्ति । कस्मिंश्चित् दिने आगमिष्यति..." इति वदन्ती शून्यदृष्ट्या आकाशं पश्यति स्म फेगा । परन्तु सा सम्यक् जानाति यत् तत् दिनं कदापि नागमिष्यति इति ।

निस्सिं बेहरः बेन्यहूदस्य समानशीलव्यसनः सखा । आन्दोलनस्य आरम्भकालादपि सः बेन्यहूदस्य कार्येषु सहकारी आसीत् । हीब्रूमाध्यम-विद्यालयः अपि तेनैव आरब्धः आसीत् । तस्य पत्नी उत्तमा हीब्रूशिक्षिका आसीत् । द्वाभ्याम् अपत्याभ्याम् उपेतः सुखी परिवारः तयोः । परन्तु एषु एव दिवसेषु निस्सिं बेहरस्य पत्नी अकस्मात् मरणं प्राप्नोत् येन दैवहतकेन बेहरः अस्मिन् अपि विषये बेन्यहूदेन समानदुःखी एव कृतः ।

सम्पत् सम्पदमिव विपत् अपि विपदम् अनुवर्तते । बेन्यहूदस्य तु विपत्तिपरम्परा एव आसीत् पुरतः । तेषु एव दिनेषु समग्रे जेरूसलेंनगरे डिफ्तीरियारोगः व्याप्तः आसीत् । शीघ्रं प्रसरन् सांक्रामिकः रोगः सः । तीव्रं ज्वरः कण्ठे असह्यं तापं च जनयन् सः रोगः अल्पेनैव कालेन दुर्बलान् बालान् ग्रसति राहुः इव । कदाचित् क्रीडितुं बहिः गतवतः बेन्झियोनस्य शरीरे संक्रान्तः आसीत् सः । सः डिफ्तीरियारोगः इति यावत् नावगतं तावता सः अन्येषु अपि बालेषु संक्रान्तः अभवत् । बेन्यहूदेन झटिति वैद्यः गृहम् आनीतः । सर्वान् परिशील्य सः उक्तवान् – "बेन्झियोनस्य परिस्थितिः गम्भीरा अस्ति, सः अधुनैव चिकित्सालयं प्रवेशनीयः । अन्येषु बालेषु

येमिमा एका एव एतावत्पर्यन्तम् अनेन रोगेण स्पृष्टा नास्ति । अतः सापि झटिति अन्यत्र प्रेषणीया, येन तस्यामपि अयं रोगः संक्रान्तः न भवेत् । अन्येषां त्रयाणामपि बालानां चिकित्सा अधुनैव आरम्भणीया ।''

वैद्यस्य सूचना यथावत् अनुसृता । बेन्झियोनः चिकित्सालयं प्रवेशितः । येमिमा दूरे बन्धुगृहे संस्थापिता । अन्येषां च बालानाम् औषधोपचारः आरब्धः । परन्तु त्रयः अपि ते बालाः तथा दुर्बलाः आसन् यत् त्रिषु अपि रोगनिरोधकशक्तिः एव नष्टा आसीत् । औषधं तेषां शरीरे अपेक्षितं परिणामं नैव अजनयत् । दिनत्रयं यावत् असह्यां पीडाम् अनुभूय एकस्यां रात्रौ आदौ अविचायिलः स्वस्य अन्तिमं श्वासं श्वसितवान् । ततः अल्पेन एव कालेन तम् अनुसृतवती कनिष्ठा अटारा । ततः नाधिकेन कालेन बेन्यहूदे पश्यति सति एव पश्यतोहरः इव श्लोमिट्नाम्याः तदग्रजायाः प्राणान् अपि अनयत् मृत्युहतकः । द्विसहस्रवर्षेभ्यः अश्रुतपूर्वया अत्यन्तं मधुरया हीब्रूभाषया वदन्तौ बालौ, तयैव भाषया काकलीं कुर्वती बाला च प्रायः 'अम्ब !' इति अन्तिमं शब्दम् उच्चार्य विरताः आसन् !

डेबोरायाः शरीरं यत्र निखातं तत्समीपे एव तया प्रदत्तानि त्रीणि अपत्यानि निखाय गृहं प्रत्यागतः बेन्यहूदः वार्तां श्रुतवान् यत् चिकित्सालयं प्रवेशितस्य बेन्झियोनस्य अपि परिस्थितिः विषमतां गता अस्ति इति । समग्रे जेरूसलेंनगरे एव डिफ्तीरियारोगः दवाग्निः इव व्याप्तः आसीत् । द्विसहस्राधिकाः शिशवः तेन कवलीकृताः आसन् । प्रायः एकमपि तादृशं गृहं न आसीत् यत्र एकः वा शिशुः न अम्रियत । तथापि बेन्यहूदसदृशः दौर्भाग्यवान् अन्यः कोऽपि न स्यात् यस्य त्रीणि अपत्यानि युगपत् मृत्युमुखं प्रविष्टानि । परन्तु बेन्यहूदस्य विरोधिषु तादृशाः अपि केचन आसन् ये च अनेन सन्तोषम् अन्वभवन् । ''धर्मविरुद्धम् आचरतः तस्य उचितं दण्डनं कृतं भगवता'' – इति परस्परम् अवदन् ते ।

चिकित्सालयम् आगतः बेन्यहूदः बेन्झियोनस्य मञ्चस्य पार्श्वे उपविष्टवान् । मृत्युना युध्यमानः इव बेन्झियोनः उच्छ्वसितुमपि कष्टम् अनुभवति स्म । मञ्चस्य अपरपार्श्वे स्थितं वैद्यं दृष्टवतः बेन्यहूदस्य मानसं प्रक्षुब्धम् अभवत् ।

झटिति उत्थाय तत्समीपं गत्वा स्वहस्ताभ्यां वैद्यस्य हस्तं गृहीत्वा गद्गदः सन् सः अवदत् – "वैद्यमहोदयः .... ! यदि एषः अपि मम पुत्रः म्रियेत .... तर्हि मम सर्वेऽपि स्वप्नाः धूलिसात्कृताः भवन्ति । कथमपि, केनापि उपायेन वा एनं रक्षतु । याचे भवन्तम् ..... ।"

"धैर्यं धरतु मित्र ! मया श्रुतं यत् परह्यः एव जर्मनीतः आगतः कश्चन युवा वैद्यः डिफ्तीरियारोगस्य नूतनविधां चिकित्सां करोति, तेन केचन बालाः रक्षिताः अपि इति । परन्तु बहवः जनाः स्वबालानां कृते नूतनस्य तस्य वैद्यस्य नूतनचिकित्साप्रयोगं कारयितुं बिभ्यति । यदि भवान् अनुमन्यते तर्हि अहं तस्य सम्पर्कं साधयामि । तद्द्वारा एतस्य चिकित्सां कारयामि.." – वैद्यः उवाच ।

"अवश्यं करोतु । मम पूर्णः अङ्गीकारः अस्ति ... ।"

ततः सः वैद्यः शीघ्रमेव अन्यस्य वैद्यस्य सम्पर्कं कृतवान् । बेन्यहूदस्य प्रसिद्धिं श्रुतवान् आसीत् सोऽपि वैद्यः । सः झटिति एव नूतनम् औषधं प्रेषितवान् । तत्सेवनक्रममपि ज्ञापितवान् । रात्रौ तदौषधं दत्त्वा बेन्झियोनस्य पार्श्वे उपविष्टवन्तौ तौ । उषःकालपर्यन्तमपि ताभ्यां तथैव उपविष्टम् । उषसि बेन्झियोनस्य शरीरे किञ्चिदिव स्पन्दनं दृष्टम् । कष्टेन नेत्रे उत्मील्य कथमपि जिह्वां सञ्चालयन् सः अवदत् – "तात ! जलम् ... ।"

"हन्त ! रक्षितः भवतः पुत्रः ..... ।" उद्घुष्टवान् सः वैद्यः । बेन्यहूदः सन्तृप्त्या निःश्वासं कृतवान् । पुत्रस्य प्राणरक्षणेन सोऽपि पुनरुज्जीवितः इव आसीत् ।

* * *

दिनेषु गच्छत्सु बेन्झियोनः क्रमेण स्वस्थतां प्राप्नोत् । परन्तु दीर्घकालं यावत् तस्य शरीरदौर्बल्यम् अनुवृत्तमेव । अधुना बन्धुगृहात् येमिमा अपि आनीता । गृहे स्थितानां पञ्चानां बालानां स्थाने अधुना शिष्टौ एतौ द्वौ एव । बेन्यहूदः तयोः विषये किञ्चित् अधिकम् अवधानं दातुं प्रयत्नं कृतवान् । फेगा अपि पौत्रयोः योगक्षेमविषये इतोऽपि दत्तावधाना अभवत् । परन्तु इदानीमपि सा हीब्रूभाषया सम्यक् भाषितुं न शक्नोति स्म । अतः सा

रशियन्भाषाम् अवलम्बते स्म । बालौ अपि क्रमशः तया सह रशियन्भाषया वक्तुम् आरब्धवन्तौ । हीब्रूगृहस्य वातावरणे क्रमशः शिथिलता आगच्छन्ती दृष्टा ।

* * *

इस्त्रेल्देशे इतोऽपि टर्कशासनमेव अनुवर्तमानम् आसीत् । शासकीयैः अधिकारिभिः एतद् ज्ञातम् आसीत् यत् विश्वस्य नानाभागेभ्यः यहूद्याः इस्त्रेल्देशम् आगच्छन्तः सन्ति इति । यदि एवमेव निरन्तरं तेषाम् आगमनं भवति तर्हि ते एव अत्र प्रबलाः भवेयुः इति भीतिः अपि आसीत् तेषाम् । अतः एव ते अधुना बाह्यदेशात् इस्त्रेल्देशम् आगन्तुं यहूद्येभ्यः अनुमतिं न यच्छन्ति स्म । तैः एतदपि लक्षितं यत् असङ्घटितेषु यहूद्येषु सङ्घटितभावस्य निर्माणे हीब्रूभाषा एकम् उत्तमं साधनम् इति । अतः हीब्रूपुनरुत्थानं स्वस्य स्थानच्युतेः कारणं भवितुम् अर्हति इति मन्यमानाः ते हीब्रू-आन्दोलनं दमयितुम् ऐच्छन् । अतः येषु विद्यालयेषु हीब्रूभाषया पाठ्यते तेषां विद्यालयानां पिधानादेशः तैः कृतः । विद्यालयानां व्यवस्थापकाः एतेन स्वयमेव स्वविद्यालयात् हीब्रूभाषां निष्कासितवन्तः । विद्यालयेषु सर्वेषां कृते हीब्रूभाषा-पाठनविषये यहूद्यधर्मगुरूणामपि आक्षेपः आसीदेव इत्यतः ते एतत् सुखेन कर्तुं शक्ताः अभवन् । तेषु विद्यालयेषु कार्यरताः हीब्रूभाषाशिक्षकाः अन्य-विषयान् पाठयितुं विवशाः कृताः ।

एतं विषयं ज्ञात्वा बेन्यहूदः तेषां हीब्रूशिक्षकाणां सम्पर्कं कृतवान् । हीब्रूपाठनविषये एव ते यथा प्रवृत्ताः भवेयुः तथा कर्तुं तान् प्रेरितवान् च । एतदर्थं तेन तेषां कृते अनधिकृतरूपेण प्रतिमासं विशेषवेतनस्यापि व्यवस्था कृता । तेन प्रभाविताः तेऽपि शिक्षकाः विद्यालयेषु रहस्यरूपेण हीब्रूभाषां पाठयितुम् उद्युक्ताः जाताः । परन्तु बालाः तद्विषये भीताः आसन् । अतः एते शिक्षकाः तेभ्यः उत्कोचरूपेण तदा तदा कानिचन नाणकानि दत्त्वा तान् हीब्रूभाषां पाठयन्ति स्म । 'अमुकः शिक्षकः हीब्रूभाषां पाठयति' इति छात्राः विद्यालयव्यवस्थापकान् यथा न वदेयुः तथा कर्तुमपि तेभ्यः उत्कोचः दातव्यः आसीत् । तदपि कृत्वा ते शिक्षकाः हीब्रूभाषां पाठितवन्तः ।

सत्सु अपि अन्येषु बहुषु कार्येषु बेन्यहूदः डीर्-पत्रिकायाः सम्पादनकार्यं तु नियतरूपेण करोति स्म । सः यत्र यत्र गच्छति तत्र तस्याः निमित्तं नूतनान् ग्राहकान् सम्पादयति स्म । ग्राहकसंख्यापि क्रमशः वर्धमाना आसीत् । विरोधिनः अपि खण्डनाय एव स्यात् नाम, तस्य विचारान् अवगन्तुं ग्राहकाः सन्तः पत्रिकां पठन्ति स्म । पत्रिकायाः पृष्ठसंख्या अपि तेन वर्धिता । नित्य-व्यवहारे हीब्रूभाषायाः प्रयोगसाध्यत्वं दर्शयितुं तेन तदनुकूलाः स्तम्भाः आरब्धाः । पत्रिकायाः प्रत्यङ्कं द्वित्रान् वा आधुनिकहीब्रूशब्दान् निर्माय वापि तान् वाचकेभ्यः सः परिचाययति स्म । गच्छता कालेन पत्रिकायाः जनप्रियता वृद्धिं गता ।

जेरूसलेंनगरमेव यद्यपि बेन्यहूदस्य केन्द्रं, तथापि जाफ्फानगरे तदनुकूलानां यहूद्यानां संख्या वर्धमाना आसीत् इत्यतः सः तत्रैव नूतनान् प्रयोगान् कर्तुं प्रयतते स्म । हीब्रूभाषाशिक्षणविषयेऽपि तत्रत्याः यहूद्याः तेन पुनः पुनः प्रेरिताः । तस्य कारणात् इस्त्रेल्बेन्कैण्ड्नामकः कस्यापि साहाय्यं विनैव तादृशम् एकं विद्यालयम् आरब्धवान् यत्र हीब्रू एव व्यावहारिकभाषा आसीत् । अन्यभाषाप्रयोगः अपि तत्र निषिद्धः कृतः । प्रायः द्विसहस्त्रवर्षाणाम् अनन्तरं तादृशः कश्चन विद्यालयः आरब्धः आसीत् यत्र अन्ये सर्वेऽपि विषयाः हीब्रूमाध्यमेन एव पाठ्यन्ते । 'स्वेन प्राप्ता महती उपलब्धिः एषा' इति अमन्यत बेन्यहूदः ।

* * *

डेबोरायाः कनिष्ठा भगिनी पोला । डेबोरा यदा दिवङ्गता तदा पोलायाः वयः नवदश वर्षाणि । मास्कोविश्वविद्यालयस्य शाखायां सा विज्ञानविषयम् अवलम्ब्य पदवीकक्ष्यायां पठति स्म । एलिसरः यदा तेषां गृहं प्रथमतया आगतवान् तदा सा शिशुः एव आसीत् । शिशुसहजया मुग्धया भावनया एव एलिसरः दृष्टः आसीत् तया । ततः गृहजनानां मुखात् एलिसरस्य एकैकं साहसमपि शृण्वत्याः तस्याः मनसि तस्य विषये कश्चन आराधनाभावः जागरितः आसीत् । विवाहानन्तरं डेबोरा अपि तदा तदा स्वभर्तुः बेन्यहूदस्य स्वप्नानां विषये पत्रद्वारा लिखति स्म । तत् पठन्त्याः तस्याः मनसि बेन्यहूदस्य

प्रतिमा निरन्तरं वर्धते स्म । केभ्यश्चित् मासेभ्यः पूर्वं डेबोरया लिखितस्य पत्रस्य वाक्यानि पठितवत्याः पोलायाः चित्तशान्तिः विलुप्ता आसीत् । डेबोरया लिखितम् आसीत् – '...... इच्छन्ती अपि अहं तव आवुत्तस्य ध्येयमार्गे आन्तं सहकारिणी भवितुं नार्हामि इति भासते । तथापि मम अन्तिमं श्वासं यावत् तस्मै पूर्णं सहकारं ददामि एव । तत्पश्चात् मदीयं स्थानं त्वया पूरणीयम् । एषा एव मम अन्तिमेच्छा । ....'

ततः अल्पेन कालेन डेबोरा परलोकं श्रितवती आसीत् । 'परन्तु एतद्विषये आवुत्तस्य कः विचारः स्यात् .... ?'

सा बेन्यहूदाय एकं पत्रं लिखितवती – 'अहं मदीयं नाम परिवर्तयितुम् इच्छामि । शुद्धं हीब्रूनाम अपेक्षितं मम । अतः कृपया किमपि सुन्दरं नाम सूचयतु' इति ।

तस्य उत्तररूपेण बेन्यहूदः झटिति एव विंशतिनाम्नां रशियन्-अर्थसहितां सूचीं प्रेषितवान् । तत्र 'हेम्डा' इत्येतत् नाम तया चितं, यस्य अर्थः अस्ति 'मया प्रेम्णा पोषिता' इति ।

* * *

डेबोरायाः दिवङ्गतेः अनन्तरं मासत्रयम् अतीतम् । तथापि गृहे व्याप्तः अन्धकारः इतोऽपि नापसृतः आसीत् । बेन्यहूदः यथापूर्वं स्वकार्ये मग्नः भवति । परन्तु तस्य मनः तत्र न लगति । गृहे तु अधुना बालौ पितामह्या सह निस्सङ्कोचं रशियन्भाषया एव व्यवहरतः । पित्रा सह तु हीब्रूभाषया । परन्तु गृहे तस्य उपस्थितिः एव न्यूना आसीत् । अतः महता तपसा बेन्यहूदेन निर्मितस्य हीब्रूगृहस्य स्वरूपनाशः तत्पुरतः एव जातः आसीत् । 'इतोऽपि दुःखतरं किम् ..? कथम् एषा समस्या परिहर्तव्या....?' दिनानि यावत् विचिन्त्य अन्ते बेन्यहूदः पोलायै पत्रं लिखितवान् यत्र सः स्वीयम् आशयं परोक्षरूपेण सूचितवान् आसीत् । पोला तु तदेव प्रतीक्षमाणा आसीत् इव झटिति स्वसम्मतिं पत्रद्वारा सूचितवती ।

बेन्यहूदस्य गृहे भित्तीनां सुधालेपनकार्यं यदा आरब्धं तदा तु जेरूसलें-नगरस्य नागरिकाः आश्चर्येण भ्रूभङ्गम् अकुर्वन् । 'उपरतायाः गृहिण्याः

मासचतुष्टयं नातीतं, तावता पुनः कः उत्सवः .. ?' येनकेनचित् प्रकारेण यदा तैः बेन्यहूदस्य पुनर्विवाहस्य वार्ता ज्ञाता तदा तु ते सर्वे स्वकर्णयोः विश्वासं न अकुर्वन् । क्रमशः एषा वार्ता सर्वत्र व्याप्ता । एतेन अत्यन्तं विस्मितः खिन्नश्च अभवत् बेन्यहूदस्य कुटुम्बवैद्यः यः डेबोरायाः शुश्रूषां कृतवान् आसीत् । सः बेन्यहूदस्य परममित्रं निस्सिं बेहरं कदाचित् पृष्टवान् - "मित्र ! मया श्रुतं किमेतत् सत्यं यत् भवतः ३४ वर्षीयं मित्रं स्वस्मात् चतुर्दशवर्षेभ्यः न्यूनवयस्कां बालां पुनः परिणेतुमिच्छति इति... ?"

तत् सत्यमिति शिरश्चालनेन सूचितवान् निस्सिं बेहरः ।

"परन्तु...., पुनः परिणेतुं तस्य अधिकारः एव नास्ति मित्र ! भवान् जानाति किं यत् सः स्वयं क्षयरोगी । तस्य रोगः एव डेबोरायां संक्रान्तः । अतः एव सा दिवङ्गता । सोऽपि न ज्ञायते कति दिनानि जीविष्यति इति । एवं सति अन्यां निष्पापाम् अल्पवयस्कां बालां मारयितुं तस्य न कोऽपि अधिकारः... ।"

निस्सिं बेहरस्यापि तत्र सहमतिः आसीदेव । वैद्यः एव कथनम् अनुवर्तितवान् - "भवान् तस्य प्रियमित्रम् । भवतः वचनम् अङ्गीकरोति सः । भवान् एव एतत् अन्याय्यं यथा न घटेत तथा करोतु । तं बोधयतु.." इति ।

'प्रयत्नं तु करोमि' - इति निश्चितवान् निस्सिं बेहरः ।

* * *

तदा एव बेन्यहूदस्य गृहं गतवान् सः । कार्यमग्नमपि तं समीपम् आहूय उपवेश्य सः वार्तालापम् आरब्धवान् - "मित्र ! अहम् अप्रियमेव किञ्चित् कथयामि । जानामि, एतेन भवान् अतीव खिद्यते इति । तथापि मया एतत् वक्तव्यमेव । अतः कथयामि...." इति पीठिकां रचयित्वा सः ततः वैद्येन उक्तं सर्वमपि अवदत् । अन्ते च स्वीयं वाक्यमपि योजितवान् - "अतः भवन्तं प्रार्थये मित्र ! विकसत् पुष्पमिव विद्यमानां विंशतिवर्षीयां मुग्धां तां पोलां वृथा मा मारयतु.... ।"

निस्सिं बेहरस्य मुखात् एतत् श्रुत्वा बेन्यहूदः गभीरचिन्तायां मग्नः अभवत् । परन्तु द्वारस्य पृष्ठभागे स्थितवता बेन्झियोनेन एतत् सर्वमपि स्पष्टतया श्रुतम् आसीत् । 'तन्नाम मम अम्बायाः स्थाने नूतनायाः अम्बायाः आनयनविचारः प्रचलति... । सापि मम मातृभगिनी पोला एव । यदि एषः विचारः क्रियान्वितः भवेत्.... ! परन्तु किमर्थम् एवं मध्ये विघ्नम् उत्पादयति अयं बेहर्मामः...?'

* * *

आरात्रि चिन्तनं कृत्वा उषःकाले बेन्यहूदः पोलां सम्बोध्य एकं पत्रं लिखितवान् । वैद्यस्य वचनानि तथैव उद्धृत्य अन्ते सः इत्थं लिखितवान् - '..... ममापि तदेव उचितमिति भासते । मम निमित्तं स्वजीवनं नाशयितुं भवत्याः अपि अधिकारः नास्ति । अतः सर्वं ज्ञात्वापि शिलया शिरः मा घट्टयतु । मम बालयोः विषये चिन्तां मा करोतु । जगति विद्यमानाः लक्षाधिकाः आनथबालाः इव तौ अपि कथमपि वर्धेते । अन्यच्च तयोः पितामही अपि अस्ति इत्यतः कथमपि निर्वहामि...।'

पत्रलेखनं समाप्य पिहितपत्रस्य उपरि पोलायाः सङ्केतं लिखित्वा तद्द्वयमपि निस्सिंबेहराय दत्त्वा बेन्यहूदः उक्तवान् - ''सः वैद्यः अपि एतत् पत्रं पठतु । अनन्तरं भवान् स्वयमेव एतत् पत्रालयं प्रति प्रेषयतु..।''

निस्सिं बेहरः पत्रं स्वीकृत्य गतवान् ।

* * *

पञ्चदशदिनानाम् अनन्तरं पोलायाः सकाशात् तन्त्रीवार्ता आगता -

'शान्तः भवतु, पत्रं प्रेषयिष्यामि, प्रतीक्षताम्...।'

तत्रापि तस्याः नाम हेम्डा इत्यासीत्, न तु पोला इति । बेन्यहूदः तन्त्रीवार्तां मित्राय दर्शितवान् । सः अवदत् - ''मन्ये सा भवतः अभिप्रायम् अङ्गीकृतवती इति । हन्त ! अन्ततो वा विवेकः दर्शितः तया..।''

बेन्यहूदः किमपि न उक्तवान् ।

* * *

# १४. पुनरायातः वसन्तमासः

ततः पक्षानन्तरं हेम्डायाः पत्रम् आगतम् । निरासक्त्या एव तत् उद्घाटितवान् बेन्यहूदः । क्रमशः पठितवान् च ।

"......तस्मै वैद्याय मे हृत्पूर्वकाः धन्यवादाः, यः मयि तावन्तं स्नेहं प्रदर्शितवान् । अतः तद्विषये अहं कृतज्ञा अस्मि । तथापि मद्वचनेन सः निवेदनीयः यत् अहं भवतः समीपे एव जीवनं यापयितुम् इच्छामि, भवतु नाम तत् वर्षं यावत्, मासं यावत्, एकं दिनं यावत् वा । एषः मम अन्तिमः निर्णयः... ।"

ततः पत्रं निस्सिंबेहराय दर्शयित्वा उक्तवान् बेन्यहूदः – "तथापि अहं तस्मिन् वैद्ये कृतज्ञः अस्मि । यतः अनेन आवयोः भावबन्धनम् इतोऽपि दृढतरं जातम् । भविष्यति अपि न केऽपि माम् आक्षेप्तुम् अर्हन्ति ... ।"

बालौ फेगा वा यद्यपि पत्रं न अपठन् तथापि बेन्यहूदस्य मुखे वर्धमानां कान्तिं दृष्ट्वा एव अजानन् यत् शीघ्रमेव नूतना गृहिणी आगमिष्यति इति । सर्वे तस्य दिनस्य प्रतीक्षायां रताः अभवन् ।

* * *

अतीतानि पुनः कानिचन दिनानि । कदाचित् बेन्यहूदः पुत्रं बेन्झियोनं समीपम् आहूय उक्तवान् – "वत्स ! अहं श्वः गमिष्यामि, तव नूतनां मातरम् आनेतुम् । सप्ताहानन्तरं मम आगमनं भवेत् । आगमिष्यन्त्याः तव मातुः स्वागतस्य उत्तरदायित्वं त्वदीयमेव" इति । प्रवृद्धं स्वस्य उत्तरदायित्वं स्मरन् सन्तुष्टः अभवत् बेन्झियोनः ।

* * *

रशियादेशतः आगता सा महानौका यदा कान्स्टाण्टिनोपाल्नगरं प्राप्नोत् तदा तत्र आगतं योनसपरिवारं द्वित्रैः मित्रैः सह सहार्दं स्वागतीकृतवान् बेन्यहूदः । पत्नी, पुत्रः, पुत्री पोला, अन्ये द्वित्राः बन्धवः च आसन् योनसेन सह । नौकायाः अवतरतः तान् दूरादेव अभिज्ञाय हस्तचालनम् अकरोत्

बेन्यहूदः । नूतनैः वस्त्रैः राजकुमारी इव शोभते स्म पोला । तथापि अनुभूतं यत् चतुस्त्रिंशद्वर्षीयः अपि बेन्यहूदः पञ्चविंशतिवर्षीयः तरुणः इव विराजते । ततः नगरस्य वसतिगृहे पूर्वमेव आरक्षितान् प्रकोष्ठान् प्राप्तवन्तः ते सर्वे ।

भोजनस्य विश्रान्तेश्च अनन्तरं यदा अन्ये नगरदर्शनाय गतवन्तः तदा एकान्ते पोलाम् उक्तवान् बेन्यहूदः - "हेम्डे ! अहम् अधुनापि विश्वसितुं न शक्नोमि यत् भवती एवम् अत्र उपस्थिता अस्ति इति.... ।"

हेम्डायाः अपि अनुभवः तादृशः एव आसीत् । वस्तुतः सा अन्येषां सर्वेषाम् अभिप्रायं मातुः विरोधं चापि अपरिगणय्य अस्वस्थमपि भगिनीपतिं परिणेतुम् अङ्गीकृत्य आगता आसीत् । अतः एव सा तथा उत्कण्ठिता आसीत् यत् तस्याः शरीरस्य प्रतिकणं कम्पते स्म इव । बेन्यहूदः अधुना यद्यपि रशियन्भाषया वदति स्म तथापि सः मध्ये मध्ये हीब्रूशब्दान् योजयित्वैव वदति स्म । किञ्चित्कालानन्तरं सः उक्तवान् - "प्रिये ! भवत्या शीघ्रातिशीघ्रं हीब्रूभाषायाः अभ्यासः करणीयः । यद्यपि अहं तदर्थं समयनिर्बन्धं न करोमि, तथापि भवती अवगन्तुं शक्नुयात् 'शीघ्रातिशीघ्रम्' इत्यस्य अर्थम् ।" तत् अवगतवती इव शिरसः सञ्चालनं कृतवती हेम्डा ।

नगरदर्शनाय गताः यदा प्रत्यागताः तत्पूर्वमेव बेन्यहूदेन नियुक्तः पुरोहितः कश्चन तत्र उपस्थितः आसीत् । टर्क्शासनयुते इस्त्रेल्देशे विवाहविषयकाः विधयः अत्यन्तं कठिनाः आसन् इत्यतः अत्रैव औपचारिकरूपेण विवाहविधिं समाप्य एव गन्तव्यमिति तस्य विचारः आसीत् । अतः तत्र उपस्थितानां केषाञ्चित् सम्मुखे पोला-बेन्यहूदयोः विवाहः सम्पन्नः । मिष्टान्नसहितेन भोजनेन द्राक्षारसपानेन च परिणयभोजोत्सवः अपि समाप्तिं गतः । तद्दिने एव ततः नौकया जाफ्फानगरं प्रति प्रस्थिताः सर्वे । प्रस्थानात् पूर्वं जेरूसलें-प्राप्तिविषये पुत्राय तन्त्रीवार्ता अपि प्रेषिता बेन्यहूदेन । जाफ्फानगरं प्राप्य ततः अश्वशकटेन सुदीर्घं प्रयाणं कृत्वा सर्वे जेरूसलें प्राप्तवन्तः ।

गृहस्य पुरतः यदा शकटस्य शब्दः श्रुतः तदा गृहात् ससम्भ्रमं बहिः आगतः बेन्झियोनः अनुजाम् आहूतवान् - "येमिमे ! पश्य, आगताः सर्वे" इति । सापि कुतूहलेन मार्गसमीपम् आगतवती । तावता शकटात् अवतीर्णाः

सर्वे ।

बेन्यहूदः क्रमशः तेषु एकैकस्य परिचयं कारितवान् । यद्यपि ताभ्यां पितामहीपितामहौ पूर्वं कदाचित् दृष्टौ आस्तां, तथापि तयोः स्मरणं न आसीत् । "एषा अस्ति युवयोः मातृष्वसा... ।" – हेम्डायाः परिचयं कारयन् उक्तवान् बेन्यहूदः ।

यद्यपि हेम्डा हीब्रूभाषां न जानाति स्म, तथापि सा 'मातृष्वसा' इत्यस्य अर्थम् अवगतवती । झटिति सा पत्युः वाक्यं परिष्कुर्वती उक्तवती – "अहं नास्मि मातृष्वसा । अपि तु माता । यद्यपि अहं तस्याः स्थानं शते प्रतिशतं पूरयितुं न शक्नोमि, तथापि प्रयत्नं तु करिष्यामि... ।"

"तथैव भवतु । एषा अस्ति युवयोः माता । 'अम्ब !' इत्येव आह्वानं क्रियताम् अस्याः..." – बेन्यहूदः अपि उक्तवान् ।

"अम्ब.. !" इति आहूतवन्तौ तौ प्रीत्या आलिङ्गितवती हेम्डा । "एतदेव त्वदीयं गृहम् । त्वमेव अस्य स्वामिनी । अत्रत्याः सर्वे वयं त्वदधीनाः । यथेच्छसि तथा कुरु" – गृहं दर्शयन् नाटकीयशैल्या पत्नीम् अवदत् बेन्यहूदः ।

* * *

हेम्डा झटिति एव गृहसञ्चालनसूत्रं स्वायत्तं कृतवती । पाकादिकार्याणि तु बेन्यहूदस्य माता फेगा करोति स्म । अतः सा बालयोः योगक्षेम-व्यवस्थां स्वयमेव निरवहत् । बेन्झियोनस्य अत्यन्तं प्राचीनशैल्या सीवितानां वस्त्राणां स्थाने नूतनानि वस्त्राणि सा स्वयमेव सीवयित्वा दत्तवती । येमिमायाः केशान् व्यवस्थितरूपेण कर्तयित्वा तस्याः शिरः यूकरहितं कृतवती । स्वेन रशियातः आनीतां पाञ्चालिकां येमिमायै क्रीडितुं दत्तवती । आपणतः कन्दुकं क्रीत्वा आनीय बालयोः कन्दुकक्रीडायाः अभ्यासं कारितवती । स्वीयम् अधिकं समयं सा बालाभ्यां सह एव यापितवती ।

हेम्डायाः आगमनेन बालयोः एकाकित्वम् अपगतम् । तेन बेन्यहूदः अपि नितरां सन्तुष्टः । परन्तु तेन लक्षितं यत् गृहे हीब्रूवातावरणं तु नष्टप्रायमेव आसीत् । अधुनापि हेम्डा रूस्भाषया एव वदति स्म ।

बेन्यहूदस्तु नियमेन तया सह अपि हीब्रूभाषया एव वदति स्म । अधुना सः हेम्डायाः हीब्रूपाठनमपि आरब्धवान् । हीब्रूभाषया लिखितं कमपि धर्मग्रन्थं स्वीकृत्य तमपि हीब्रूभाषया एव पाठयितुम् आरभत सः । हेम्डा तत्र यदा जामिताम् अनुभवति तदा सः सम्भाषणं पाठयति स्म । कदाचित् हेम्डा तम् उक्तवती – ''प्रिय ! हीब्रूभाषिणः भवतः बान्धवाः हीब्रूभाषाम् अजानतीं मां दृष्ट्वा विस्मिताः भवन्ति । तदर्थं भवन्तं दोषभाजं च मन्यन्ते । अतः कृपया अहं यावत् न वदामि तावत् भवान् कमपि बन्धुं सुहृदं वा गृहं प्रति मा निमन्त्रयतु'' इति । अनिच्छन् अपि बेन्यहूदः तत् अङ्गीकृतवान् ।

दिनस्य अधिककालं गृहे स्थातुम् इच्छन् बेन्यहूदः स्वस्य पत्रिकायाः कार्यालयं मुद्रणालयं च गृहं प्रत्येव आनीतवान् । तेन स्वस्य उपस्थितौ वा गृहे हीब्रूवातावरणं रक्षितं भवति इति तस्य आशयः । मुद्रणालये अक्षरसंयोजनादिकार्यं कुर्वन्तः कर्मकराः तेन सूचिताः यत् तैः हीब्रूभाषया एव वक्तव्यं, न तु अन्यया इति । तेषु अल्पवयस्कः कश्चन कर्मकरः तेन प्रतिदिनं बालाभ्यां सह क्रीडितुमेव नियोजितः, 'क्रीडासमये हीब्रूभाषया एव वक्तव्यम्' इति समयेन । एतैः सर्वैः प्रयत्नैः तस्य गृहे शनैः शनैः हीब्रूवातावरणं पुनरपि निर्मीयमाणम् आसीत् ।

मासत्रयानन्तरं कदाचित् हेम्डा बेन्यहूदं पुरतः उपवेश्य पञ्चनिमेषात्मकं भाषणं किञ्चित् कृतवती । तत् आसीत् पूर्णतः हीब्रूभाषया । यद्यपि तत्र केचन दोषाः आसन् तथापि तत् श्रुत्वा बेन्यहूदः नितरां सन्तुष्टः अभवत् । तदनन्तरं हेम्डा घोषितवती – ''इतःपरं भवान् कमपि अस्माकं गृहं निमन्त्रयितुम् अर्हति । नाहं तदा अन्यभाषया वदन्ती भवतः सङ्कोचं जनयामि । अपि तु कथमपि हीब्रूभाषया एव तैः सह व्यवहरामि'' इति । तत्पश्चात् सा तथैव आचरितवती अपि ।

ततः सप्ताहानन्तरं बेन्यहूदः हेम्डया सह जाफ्फानगरं गतवान् । तत्र एतावता हीब्रूभाषिपरिवाराः अनेके निर्मिताः आसन् । तत्र सर्वत्र बेन्यहूदः साभिमानं पत्नीं नीतवान् । सर्वैः सह हीब्रूभाषया एव भाषमाणां हेम्डां दृष्ट्वा न केऽपि विश्वसितवन्तः यत् मासत्रयात् पूर्वम् एषा हीब्रूभाषां किञ्चिदपि न

जानाति स्म इति ।

जांप्फासमीपस्थेषु केषुचित् ग्रामेषु हीब्रूभाषिणः यहूद्याः आगत्य निवासं कृतवन्तः आसन् । तेषु अन्यतमं ग्रामं दर्शयितुं बेन्‌यहूदः तत्र पत्नीं नीतवान् । तयोः ग्रामप्राप्तिसमये मार्गपार्श्वे केचन अल्पवस्काः बालाः कलहायमानाः इव परस्परम् उच्चैः किमपि वदन्तः आसन् । तत् श्रुत्वा बेन्‌यहूदः झटिति स्तम्भितः इव अतिष्ठत् । बालानां मुखमेव पश्यतः अपि तस्य दृष्टिः अन्यत्र अव्यक्ते आकाशे संलग्ना इव आसीत् । तावता तेऽपि बालाः अपरिचितौ एतौ दृष्ट्वा 'सुप्रभातम्' इति कथनेन अभिनन्द्य ततः गतवन्तः ।

तेषां गमनानन्तरमपि तथैव स्थितवन्तं पतिं दृष्ट्वा हेम्डा आश्चर्येण उक्तवती – "प्रिय ! किं सञ्जातम् ? किमपि विस्मयकारकं दृष्टवान् किम् ?" इति ।

"सत्यं प्रिये ! अहं महत् विस्मयावहं दृश्यं दृष्टवान् । भवती श्रुतवती खलु, एतेषां बालानां सम्भाषणम् ? एते परस्परं वदन्ति स्म हीब्रूभाषया । हीब्रूभाषिणः बालाः.. !! मम बहुभ्यः वर्षेभ्यः पूर्वतनः स्वप्नः एषः । स्वगृहे तु हीब्रूभाषिणः बालाः मया सृष्टाः । तादृशाः अन्येऽपि बालाः कदा भविष्यन्ति इति उत्सुकः आसम् । ते अद्य दृष्टाः मया । निस्संशयं नूतना परम्परा एव निर्मिता अभवत् । इतोऽपि किमस्ति विस्मयावहम् ....?"

ग्रामे तादृशान् अन्यान् अपि बालान् दृष्ट्वा तैः सह आतृप्ति सम्भाषणं कृत्वा आनन्देन ततः प्रतिनिवृत्तौ तौ ।

* * *

यत्र यत्र गच्छति तत्र स्वपत्रिकायाः ग्राहकैः वाचकैश्च अवश्यं मिलति स्म बेन्‌यहूदः । तेषां विचारान् अपि सः सावधानेन शृणोति । वाचकाः अपि तं बहुविधान् प्रश्नान् पृच्छन्ति स्म । कदाचित् वाचकमेलने केचन तम् इत्थम् अवदन् – "डीर्पत्रिकायाः मुद्रणाय उपयुज्यमानं कागदम् उत्तमं नास्ति । कृपया तत् परिवर्तयतु ।"

अन्यः कश्चन अवदत् – "पत्रिकायां प्रायः सर्वेऽपि लेखाः भवता एव लिख्यन्ते । यद्यपि भवदीयाः लेखाः उत्तमाः भवन्ति तथापि तेषु सर्वेषु

समाना शैली भवति । अतः पठने नीरसता अनुभूयते । कुतः भवता अन्य-स्थानीयानां लेखकानां द्वारा अपि लेखाः न लेखयितव्याः, येन अस्माकम् अन्यविधशैलीनाम् अपि परिचयः भवेत् ....'' इति ।

''पत्रिकायां प्रतिमासं भवता नूतनाः हीब्रूशब्दाः परिचाय्यन्ते । तत्तु समीचीनमेव । परं तेषां शब्दानां प्रामाणिकत्वं कथम् ? किंमूलाः ते शब्दाः ? तदपि सूचनीयं भवता । अन्यच्च भवता स्वीक्रियमाणाः शब्दाः समग्रं देशं मनसि निधाय स्वीकृताः सर्वजनस्वीकारयोग्याश्च भवेयुः । अतः तादृशशब्दानां निर्माणे अन्येषामपि विदुषां साहाय्यं भवता कुतः न स्वीकरणीयम् ?''

यद्यपि वाचकानाम् एतादृशाः प्रतिस्पन्दाः बेन्यहूदं तस्मिन् क्षणे निरुत्तरं कुर्वन्ति स्म, तथापि सः तेन स्वकीयम् उत्तरदायित्वं कियदधिकम् अस्ति इति ज्ञात्वा सन्तोषं गौरवं चापि अनुभवति स्म । परन्तु हेम्डा तु अनुभवति स्म यत् 'एते सर्वे मम पतिम् अपराधिस्थाने संस्थाप्य एवं प्रश्नबाणैः विद्ध्यन्ति' इति । परम् अस्मिन् विषये किमपि साहाय्यं कर्तुम् अहम् अक्षमा इति मत्वा सा मौनमेव आश्रयते स्म ।

अथ कदाचित् बेन्यहूदं द्रष्टुम् आगताः अभिमानिनः तम् अपृच्छन् - ''भवतः शब्दकोषनिर्माणकार्यं कथं प्रचलति ? कदा वा तत् समाप्तिम् एष्यति..?''

पार्श्वे एव उपस्थितां हेम्डां प्रदर्शयन् सः अवदत् - ''मन्दगत्या प्रवर्तते । तस्य वेगवर्धनं तु एताम् अवलम्ब्य तिष्ठति ....'' इति ।

''तन्नाम....?'' - ते तस्य अर्थम् अज्ञात्वा अपृच्छन् ।

''यथा यथा एषा मदीयेषु अन्येषु कार्येषु अधिकम् अधिकं सहयोगं कुर्यात् तथा तथा मम शब्दकोषनिर्माणकार्यं वेगेन प्रचलेत् । अधुना तु मम समयः सर्वविधकार्येषु विभक्तः भवति । अतः एकाग्रबुद्ध्या शब्दकोष-निर्माणे मनः प्रवर्तयितुं न शक्नोमि'' इति बेन्यहूदः उक्तवान् ।

तेषां मित्राणां गमनानन्तरं हेम्डा पतिं पृष्टवती - ''भवतः आशयम् अहं नावगतवती । भवतः कस्मिन् कार्ये मया इतोऽपि अधिकः सहयोगः दत्तः

भवान् शब्दकोषनिर्माणं शीघ्रं कुर्यात्.....?''

''भवती जानाति यत् मम सर्वाधिकः समयः पत्रिकायाः पृष्ठानां पूरणाय एव व्ययितः भवति इति.....।''

''परं तद्विषये अहं किं कर्तुं प्रभवामि..? यतः अहं खलु हीब्रूभाषानभिज्ञा। अधुनापि हीब्रूभाषायां मम ज्ञानं सामान्यसम्भाषण-पर्यन्तमेव। विद्यालये अध्ययनसमयेऽपि मम विषयः आसीत् विज्ञानं, न तु साहित्यम् .....!''

''परन्तु भवत्याः लेखनकौशलं मया ज्ञातमेव। पूर्वं भवत्या मह्यं लिखितानि पत्राणि साहित्यगन्धीनि एव आसन्। यदि किञ्चिदेव प्रयत्नः क्रियेत तर्हि भवती उत्तमा लेखिका भवितुम् अर्हति..... ।''

''पत्रलेखनम् अन्यत्, साहित्यनिर्माणं च अन्यदेव। कृपया मम शिरसि तादृशं भारं न आरोपयतु प्रिय..... ।''

''प्रिये ! आधुनिकहीब्रूसाहित्यम् इदमिदानीं विकसत् अस्ति । मोहकस्य स्त्रीस्पर्शस्य महती आवश्यकता अस्ति तत्र। पुरुषैः अनव-गम्यमानाः स्त्रीसंवेदनाः किं तत्र उल्लिखिताः न भवेयुः..? अन्यच्च आवयोः प्रवासावसरे मिलितानां वाचकानां मुखादेव भवती ज्ञातवती स्यात् यत् नूतनैः लेखकैः लिखितान् लेखान् वाचकाः प्रतीक्षमाणाः सन्ति, चातकाः इव। अतः एषः अस्ति कश्चन सु-अवसरः। कालस्य आवश्यकता अपि अस्ति एषा... ।''

''वादे कः शक्नोति भवन्तं जेतुम्...? अस्तु, अहम् अङ्गीकरोमि । परन्तु मम भाषायाः पूर्णः परिष्कारः भवदधीनः ...'' - अङ्गीकारपूर्वकम् उक्तवती हेम्डा।

इत्थम् आरब्धा 'जेरूसलेंतः पत्राणि' इति नाम्ना अङ्किता हेम्डायाः सा लेखनमाला बहुशीघ्रमेव अत्यन्तं जनप्रिया अभवत्। तत्कारणादेव नूतनाः बहवः वाचकाः पत्रिकां क्रेतुम् आरभन्त। दूरे दूरे निवसतः हीब्रूभाषिणः जनान्, विशिष्य महिलाः उद्दिश्य तया पत्ररूपेण ते लेखाः लिख्यन्ते स्म। न केवलं गृहकृत्यादिविषयान्, अपि तु फेषन्(Fashion)प्रभृतीन् सकल-

वनिताप्रियावहान् विषयान् अधिकृत्य अपि लेखाः तया लिखिताः ।

गच्छता कालेन पत्रिकायाः विज्ञापिकासंग्रहणस्य उत्तरदायित्वमपि हेम्डायाः उपरि आपतितम् । तन्निमित्तं सा जेरुसलेंनगरस्य प्रत्यापणं गतवती । विज्ञापिकायाः दाने उद्यमपतीनां मनसः अङ्गीकारं प्राप्तुं बहुधा प्रयत्नं कृतवती च । आरम्भे बहवः तस्याः उपहासम् अपि अकुर्वन् । परन्तु सा प्रयत्नं न अत्यजत् । सर्वप्रथमं यः विज्ञापिकां दत्तवान् सः अनुभूतवान् यत् तस्मिन् सप्ताहे तस्य आपणे पूर्वापेक्षया अधिकं वाणिज्यं प्रवृत्तम् इति । तस्य एतम् अनुभवम् अन्यान् अपि आपणिकान् श्रावयन्ती हेम्डा ततः अपि विज्ञापिकाः संगृहीतवती । समर्था लेखिका यथा, तथा पत्रिकायाः समर्था विज्ञापिकासंग्रहकर्त्री (आर्थिकव्यवस्थापिका) अपि अभवत् सा । पत्न्याः एतादृशं विकासं दृष्ट्वा नितरां सन्तुष्टः बेन्यहूदः ।

* * *

# १८. पौगण्डस्य प्रतापः

बेन्झियोनः अधुना एकादशवर्षीयः । नियतरूपेण विद्यालयं गच्छति सः । पितुः साहसप्रवृत्तिः तस्मिन् अपि दृश्यते । येमिमा अपि सर्वेषु विषयेषु अग्रजमेव अनुकरोति । समानशीलानां तादृशबालानां कश्चन गणः अस्ति इदानीं यस्य च बेन्झियोनः एव नायकः । सः गणः विद्यालयसमयानन्तरं बेन्झियोनस्य गृहे उद्याने वा तदा तदा मिलति । तदा बहवः विचाराः तत्र प्रविशन्ति गोष्ठ्याम् । एतादृश्यां गोष्ठ्यां कदाचित् कश्चन तेन श्रुतां नूतनां वार्तां श्रावितवान् – जाफ्फासमीपे निवसन्तः केचन यहूद्यबान्धवाः अरब्बीयैः मारिताः इति । वस्तुतः निरपराधानां तेषां कृषिकाणां तत्सदृशानाम् अन्येषां यहूद्यानां च रक्षणाय शासनेन नियुक्ताः रक्षकाः एव आसन् ते अरब्बीयाः । परन्तु केनचित् कारणेन ते रक्ष्यान् एव एतान् मारितवन्तः आसन् ।

वार्ताम् एनां श्रुत्वा सर्वेऽपि बालाः गम्भीराः अभवन् । यद्यपि मृतानाम् एतेषां च न कोऽपि रक्तसम्बन्धः, तथापि तेऽपि हीब्रूभाषिणः यहूद्यबान्धवाः इत्यतः सर्वेषां मनसि नितरां खेदः जातः आसीत् । "एतादृश्यः घटनाः तदा तदा प्रवर्तन्ते । यदि अस्माभिः कोऽपि प्रतीकारः न क्रियेत तर्हि अग्रे अस्माकं बन्धूनां पुनः पुनः मारणं भवेत्....." – बेन्झियोनः उक्तवान् ।

"परन्तु बालैः अस्माभिः किं कर्तुं शक्यते...? एतत्तु ज्येष्ठैः चिन्तनीयम्...." – तेषु अन्यतमः बालः उक्तवान् ।

"मित्र ! वयं बालाः एव कुतो न स्याम.. ? परन्तु वयं किमपि कर्तुम् असमर्थाः इति मा चिन्तयतु । यदि वयमपि सङ्घटिताः भवेम, शक्तिसञ्चयं च कुर्याम तर्हि महदपि युद्धं सम्मुखीकर्तुं शक्नुयाम....।"

"युद्धसम्मुखीकरणम्.....! कदाचित्.... भवान् सैन्यनिर्माणविषयं वदन् नास्ति खलु.....?" – सः पुनः आश्चर्येण पृष्टवान् ।

"कुतो न...? प्रायः अस्माभिः तदेव करणीयं भवेत् । तादृशं बलयुतं यहूद्यसैन्यं सज्जीकर्तव्यं यच्च न केवलम् अरब्बीयान्, अपि तु अन्यान् अपि

विरोधिनः पराजेतुं समर्थं भवेत्...." – बेन्झियोनः आत्मविश्वासेन उक्तवान् । गृहीतशस्त्राणां धृतसमवस्त्राणां रणघोषं कुर्वतां सैनिकानां कश्चन गणः बालानां मनसि एव सञ्चलनम् अकरोत् ।

"अहो, तादृशसैन्यस्य निर्माणं तु अत्यन्तं व्ययसाध्यम् । कुतः वयं धनम् आनयेम....?" – अन्यस्य बालस्य प्रश्नः आसीत् ।

"मया सङ्गृहीतानि कानिचित् नाणकानि सन्ति । तानि तु अहं दातुं सज्जा अस्मि...." – येमिमा अवदत् ।

"सर्वैरपि दातव्यं भवेत् । परन्तु तेनापि तावता अल्पेन धनेन किमपि कर्तुं न शक्यते । अस्माभिः अन्यदपि धनमूलं चिन्तनीयम्.....।"

"तत् कथम्.....?"

तस्य प्रश्नस्य उत्तरं कस्यापि न अस्फुरत् । "कृपया मह्यम् एकस्य दिनस्य अवसरं यच्छन्तु । तावता अहं कमपि उपायं चिन्तयिष्यामि । भवन्तः अपि अन्यत् किं कर्तुं शक्यते इति विचिन्त्य आगच्छन्तु....." इति उक्त्वा गोष्ठ्याः समाप्तिं कृतवान् बेन्झियोनः ।

* * *

परेद्यवि यदा ते सम्मिलिताः तदा बेन्झियोनस्य मुखोद्घाटनात्पूर्वमेव अन्यः बालः उक्तवान् – "मित्र ! भवान् जानाति किं यत् बेरन् रोथ्स्चैल्ड्वर्यः जेरूसलेंनगरम् आगमिष्यति इति ...?"

"सत्यम्....? कथं जानाति भवान् ?" – बेन्झियोनस्य मुखम् आनन्देन विकसितम् अभवत् ।

"मम तातेन मित्रम् उद्दिश्य कथ्यमानं श्रुतं मया । प्रायः मासत्रयानन्तरं तस्य आगमनं भवेत् इति.....।"

बेरन् रोथ्स्चैल्डः....! फ्रान्स्देशे प्यारिस्नगरे निवसन् यहूद्यः सः न केवलं महान् धनिकः, अपि तु महादाता । इस्रेल्देशे प्रचलतां बहूनां यहूद्यसङ्घटनकार्याणाम् अर्थसाहाय्यं सः करोति स्म । परन्तु इस्रेल्देशे निवसन्तः तस्य विश्वासपात्रभूताः धर्मगुरवः येषां संस्तुतिं कुर्वन्ति तेषाम् एव अर्थसाहाय्यं तेन क्रियते स्म । यदि मनः अङ्गीकरोति तर्हि सुमहदपि

अर्थसाहाय्यं कर्तुं समर्थः सः ।

"साधु साधु ! यदि सः एतं विचारम् अङ्गीकरोति तर्हि यहूद्यसैन्यस्य आर्थिकसमस्या कदापि न भविष्यति.....।"

"तन्नाम अस्माकं सैन्यनिर्माणयोजना मासत्रयं यावत् व्याक्षिप्ता भवति.....?"

"नहि नहि....। वयं तु इदानीमेव कार्यारम्भं करिष्यामः । प्रथमं तस्मै निवेदनपत्रं प्रेषयामः । तत् दृष्ट्वा सः किञ्चित् धनं प्रेषयिष्यति । यदा अत्र आगम्यते तदा अस्माकं सैन्यं प्रत्यक्षं दृष्ट्वा सः सन्तुष्टः भविष्यति । तदा तु पर्याप्तमात्रेण धनमपि दास्यति एव" – संशयः एव न आसीत् बेन्झियोनस्य वचसि ।

"परन्तु तस्य पत्रसङ्केतः कुत्र अस्ति....?"

"चिन्तां न करोतु । सः तथा प्रसिद्धः यत् प्यारिस्नगरे सर्वोऽपि जनः तं जानीयात् एव । अन्यच्च कदाचित् विद्यालये अस्माकं प्राचार्यः उक्तवान् आसीत् यत् सः तत्र अध्यक्षभवनस्य समीपे प्रासादे निवसति इति ...."

ततः बेन्झियोनः दीर्घकालं यावत् सर्वैः सह समालोचनं कृत्वा सर्वेषामपि अभिप्रायं स्वीकृत्य पत्रमेकं सज्जीकृतवान् । अन्ते तस्य परिष्कृतं रूपम् उत्तमे कागदे लिखितवान् ।

*श्रीमान् बेरन् एड्मण्ड् रोथ्स्चैल्डमहोदयः*
*अध्यक्षनिवासस्य पार्श्वे*
*प्यारिस्नगरम्, फ्रान्स्*

इत्येवं सङ्केतं लिखित्वा तत्पश्चात् फ्रेञ्च्भाषया सः एवं लिखितवान् -

सेवकस्य अस्य एतादृशम् अनिरीक्षितं पत्रं दृष्ट्वा विस्मितः मा भवतु मान्यवरः ।

भवदीये परमप्रिये इस्रेल्देशे एतेषु दिनेषु निष्पापानां केषाञ्चित् यहूद्यकृषिकाणां निष्कारणं मारणं प्रचलति । अतः धूर्तानाम् अरब्बीयानां निग्रहणाय सैन्यस्य आवश्यकता अस्ति । अस्य पत्रस्य अन्ते कृतहस्ताक्षरः अहं मम शताधिकमित्राणां पक्षतः भवन्तं सविनयं निवेदयामि यत् तादृशस्य

यहूद्यसैन्यस्य नेतृत्वं वोढुम् अहं सर्वथा सज्जः अस्मि । परन्तु भवान् जानाति एव यत् तादृशसैन्यनिर्माणम् अतीव व्ययसाध्यम् इति । यद्यपि अत्यल्पव्ययेन एव वयं तत् साधयितुम् इच्छामः, तथापि कश्चन व्ययः तु भवत्येव । आरम्भे शतं सैनिकाः केवलं भवन्ति सैन्ये । अहं चिन्तयामि यत् तावतामपि निर्वहणाय प्रतिमासं शतं पौण्ड्मितं धनम् अपेक्षितं भवति इति । तत्रापि सैन्यारम्भकरणाय सैनिकानां समवस्त्रनिर्माणाय शस्त्रक्रयणाय च झटिति एव धनस्य आवश्यकता महती अस्ति । अतः अहं प्रार्थये यत् अस्मासु अविश्वासम् अकुर्वता भवता एतत्पत्रप्राप्तिसमनन्तरमेव शत'नेपोलियंन्'मितं धनं प्रेषणीयम् इति ।

एतावता अत्र अस्माभिः सेनायाः अधिकारिणः निर्वाचिताः सन्ति । सेनायाः ध्वजः अपि निश्चितः अस्ति, यस्य प्रतिकृतिः अनेन सह प्रेषिता अस्ति । सैन्यस्य सञ्चलनगीतरूपेण उपयोगाय फ्रेञ्चसैन्यसञ्चलनगीतस्य मया हीब्रूभाषया अनूदितं रूपमपि प्रेषयन् अस्मि । कृपया परिशीलयतु । महादाता भवान् अस्मिन् महाकार्ये अस्माकं साहाय्यं करिष्यति एव इति वयं पूर्णतया विश्वसिमः । एतन्निमित्तं भाविनि काले समग्रः देशः एव 'आधुनिक-यहूद्यसैन्यस्य निर्माता' इति भवन्तं कृतज्ञतापूर्वकं स्मरिष्यति ।

शतं प्रणामाः ।

इति भवदीयः आज्ञाधारकः

*बेन्यहूद्पुत्रः बेन्झियोनः*

*हीब्रूसेनापतिः*

सर्वेऽपि ते मिलित्वा पत्रालयद्वारा तत् पत्रं प्रेषितवन्तः । ततः आरब्धा क्षणगणना । दिनानि अतीतानि । सप्ताहाः गताः । मासाः अपि व्यतीताः । प्यारिस्तः न किमपि प्रत्युत्तरं प्राप्तम् । परन्तु बेन्झियोनः निराशः नाभवत् । स्वेन अनूदितं सञ्चलनगीतं गायन् सः सैनिकानां पथिसञ्चलनस्य अभ्यासं कारितवान् । शस्त्राणां स्थाने दण्डं गृहीत्वा व्यायामम् अकुर्वन् सैनिकाः । जेरूसलेंनगरस्य नागरिकाः एतत् दृश्यं दृष्ट्वा आश्चर्यम् अनुभूतवन्तः ।

अत्रान्तरे हेम्डा गर्भवती जाता । वार्ताम् एनां श्रुत्वा नितरां सन्तुष्टः

बेन्यहूदः । सः तस्याः योगक्षेमविषये तीव्राम् आसक्तिं निरवहत् । एषु दिनेषु येमिमा बेन्झियोनः चापि गृहकार्येषु मातुः साहाय्यं कुरुतः स्म । सुखेन एव दिनानि नीतानि । नव मासाः अपि अतीताः ।

* * *

कदाचित् बेन्यहूदस्य गृहद्वारे उपस्थाय कश्चन अपरिचितः शब्दम् अकरोत् । द्वारे उद्घाटिते सति सः अपरिचितः 'अहमस्मि बेरन् रोथ्स्चैल्डस्य प्रतिनिधिः' इति आत्मानं परिचाययन् बेन्यहूदं तीक्ष्णदृष्ट्या पश्यन् उक्तवान् – "भवान् एव खलु बेन्यहूदः... ?"

"आम् । अहमेव ..." – सः अवदत् ।

"मान्यवरस्य बेरन्महोदयस्य वचनैः एव श्रूयतां तस्य सन्देशः । 'मम सकाशात् धनं प्राप्तुं भवता क्रियमाणं नूतनं तन्त्रमिदं नैव फलति । अन्यच्च एतत् अकार्यं भवतः शोभां न जनयति । एतेन भवतः विश्वासपात्रत्वमपि नष्टमस्ति । पुनः कदापि न विश्वसिमि भवतः वचनेषु... ।"

"महोदय ! किम् उच्यते भवता ? तादृशं किम् अकार्यं कृतं मया... ?" – किमपि अनवगच्छन् पृष्टवान् बेन्यहूदः ।

"तदेव, भवता लिखितं तत् पत्रं..., तस्य पठनेन नितरां कुपितः अस्ति बेरन्वर्यः । यहूद्यसैन्यनिर्माणम्... ! हीब्रूसैन्यनिर्माणम्... !! सः चिन्तयति यत् एतादृशी कल्पना अपि मूढैः एव क्रियते इति.... "

"किन्तु श्रीमन्... "

"अलं किन्तु परन्तु कथनेन... । बेरन्महोदयः भवन्तं स्पष्टतया सूचयितुं मां निर्दिष्टवान् अस्ति यत् भवता तस्य विश्वासभङ्गः कृतः अस्ति । अतः सः निर्णीतवान् अस्ति यत् भवतः पत्रिकायै यत् साहाय्यं क्रियमाणम् अस्ति तदपि इतःपरं न क्रियते इति... ।"

"श्रीमन् ! कृपया शृणोतु तावत् । निश्चयेनापि तेन किमपि अन्यथाग्रहणं कृतम् अस्ति । तत् परिहरामः वयम् । भवान् यस्य पत्रस्य विषये वदति किं तत् पत्रम् अत्र अस्ति.... ?" – मध्ये प्रविशन्ती उक्तवती हेम्डा ।

"कुतो न.., अत्रैव अस्ति" – इति वदन् सः यानपेटिकाम् उद्घाट्य ततः

पत्रमेकं निष्कास्य यच्छन् पुनः उक्तवान् – "भवानेव पठतु एतत्... ।"

बेन्यहूदः सावधानेन तत् पठितवान् । यावत् तत् न समापितवान् तस्य कोपः पुत्रम् उद्दिश्य प्रवृत्तः । तत्रैव उपविष्टं बेन्झियोनं सः अवदत् – "मूर्ख ! ईदृशम् अकार्यं कृतवान् त्वम्... !"

"सत्यं, मया एव लिखितं तत् पत्रम् । कः दोषः तत्र... ? यहूद्यसैन्यस्य आवश्यकता तु अस्ति एव । यदि बेरन्वर्यः इच्छति तर्हि साहाय्यं करोतु । नो चेत् वयमेव कथमपि सैन्यनिर्माणं तु कुर्मः एव.... " – पुत्रः उवाच ।

"वत्स ! ज्येष्ठानां व्यवहारं नावगच्छसि त्वम् । अस्माकं सम्भाषणं श्रुत्वा स्वयमेव कल्पनां कृत्वा किमपि किमपि चिन्तयसि । स्वयं बालः इत्येतत् विस्मरसि, प्रौढः इव व्यवहरसि । त्वं न जानासि यत् अस्मान् कीदृशे सङ्कटे पातितवान् असि इति...." – हेम्डा उक्तवती ।

"हन्त ! ज्येष्ठानां व्यवहारे बालानां चञ्चूप्रवेशः.. !" – सः प्रतिनिधिः उक्तवान् – "एतेनैव कारणेन बेरन्वर्यस्य अत्र आगमनयोजना अपि निरस्तीकृता... ।"

न ज्ञायते बेन्यहूदः पुत्रस्य कीदृशं दण्डनं चिन्तयन् आसीत् इति, तावता एव श्रान्ता इव आसन्दे उपविशन्ती हेम्डा उक्तवती – "प्रिय, न शक्नोमि स्थातुम् । भासते यत् मम प्रसवकालः सन्निहितः इति । आनीयतां काचित् अनुवैद्या... ।"

"मित्र ! अनन्तरं भवन्तं द्रक्ष्यामि । अधुना अनुमन्तव्यः अहम् ..." इत्युक्त्वा ततः धावितवान् बेन्यहूदः । बेन्झियोनः अपि गृहात् निर्गतः । तस्य सुन्दरः स्वप्नः नष्टः आसीत् । आहतः कुक्कुरः इव सः रात्रिपर्यन्तं नगरस्य सर्वासु वीथीषु निरर्थकम् इतस्ततः भ्रमणं कृतवान् । रात्रौ अतीव विलम्बेन गृहम् आगतवतः तस्य कर्णे उक्तवती येमिमा – "भ्रातः ! अम्बा शिशुं प्रसूतवती अस्ति । नितरां सुन्दरी सा । अम्बा वदति यत् तस्याः नाम भवतु 'डेबोरा' इत्येव इति ! भवतु खलु... ?"

* * *

सौभाग्यवशात् बेरनस्य प्रतिनिधिः समाहितः जातः । अतः न तथा

अहितकरं किमपि प्रवृत्तं यथा सम्भावितम् । बेन्झियोनः अपि वचनमात्रेण दण्डितः पित्रा । परन्तु बेन्झियोनस्य साहसप्रवृत्तिः दिने दिने वर्धमाना एव आसीत् । अल्पेनैव कालेन द्वितीयं साहसम् अनुष्ठातुं सज्जः अभवत् सः ।

कदाचित् विपणिमध्ये सञ्चरन् आसीत् बेन्झियोनः । तत्र तस्य परिचितः कश्चन आपणिकः आसीत् । सः तं समीपम् आहूय किमपि यन्त्रं दर्शयन् उक्तवान् – "जानाति किम् ? एतत् यन्त्रं ह्यः एव आगतम् अस्ति... ।"

तत् आसीत् लघु प्रतिलिपिकरणयन्त्रम् । सुन्दरैः अक्षरैः कृष्णमष्या लिखितस्य कस्यापि पत्रस्य नैकाः प्रतिकृतयः झटिति एव कर्तुं शक्यन्ते तेन यन्त्रेण । तेन मुद्रितां प्रतिकृतिमपि दर्शितवान् सः आपणिकः ।

तत् दृष्टवतः बेन्झियोनस्य मनसि अभूतपूर्वा काचित् कल्पना आगता । "आम् । कुतो न शक्यते ?" इति चिन्तितवान् सः । आपणतः गृहं प्रति आगमनसमये तस्य मनसि सा एव कल्पना स्पष्टं रूपं प्राप्नुवती आसीत् ।

'हीब्रूभाषया बालानाम् एव काचित् पत्रिका प्रकाशनीया, यस्याः सम्पादकः अहमेव भवामि । तत्रत्याः सर्वेऽपि विषयाः बालानां कृते एव । लेखकाः अपि बालाः एव । डीर्पत्रिका इव सापि जनप्रिया भवेदेव..... । परन्तु व्ययविषये किं करणीयम् ? आदौ तादृशम् एकं प्रतिलिपिकरणयन्त्रं क्रेतव्यम् । तदर्थमेव अधिकं धनम् अपेक्षितम् । ततः पत्रिकायाः निमित्तं लेखः, कथाः, कविताश्च लेखयितव्याः । पत्रिकायां के के विभागाः भवेयुः... ?'

सः तेषाम् आवलीमपि कृतवान् –

१. पाठकमित्रेभ्यः पत्रम्
२. हीब्रूबालानां कर्तव्यम्
३. प्राचीनयहूद्यसाम्राज्यस्य सीमानः ।
४. बालनाटकम्
५. बालकविताः
६. विनोदकणिकाः, हास्यरचनाश्च
७. अन्ये विषयाः ।

एवं निश्चित्य सः विषयसङ्ग्रहणम् अपि अकरोत्। ततः परिचितेयु एकैकमपि धनसाहाय्यं प्रार्थितवान् रहसि । तस्य आशयः आसीत् यत् पत्रिका यावत् विक्रयणाय विपणिं नागच्छति तावत् केऽपि एतं विषयं न जानीयुः इति । सः प्रथमं निस्सिं बेहरस्य गृहमेव गतवान् । सः तदा एव नगरान्तरं गन्तुम् उद्युक्तः आसीत् । बेन्झियोनस्य विचारं श्रुत्वा सः बालं तं निराशं कर्तुम् अनिच्छन् तस्मै पञ्च नाणकानि दत्तवान् । बेन्झियोनस्य उत्साहः द्विगुणितः जातः । कानिचित् दिनानि यावत् सः तथैव धनसंग्रहणं कृतवान् । अन्ते च प्राप्तं सर्वमपि तस्मै आपणिकाय दत्त्वा उक्तवान् - "मम कृते तादृशमेव यन्त्रं दापयतु" इति ।

ततः स्वविद्यालये पठतः तस्य स्नेहितस्य गृहं गतवान् यः स्वस्य सुन्दरहस्ताक्षरैः विद्यालये एव प्रसिद्धः आसीत् । तं प्रार्थितवान् - "पत्रिकायाः निमित्तं सर्वेऽपि लेखाः भवता स्वहस्तेन लिखित्वा दातव्याः । तन्निमित्तं भवते किञ्चित् धनमपि दीयते" इति । यद्यपि सः आरम्भे न अङ्गीकृतवान् तथापि तस्य धनदानप्रस्तावं श्रुत्वा वा अन्ते अङ्गीकृतवान् । अल्पेन एव कालेन लिखित्वा दत्तवान् अपि ।

सप्ताहानन्तरं बेन्झियोनस्य सा पत्रिका विपण्यां दृष्टिगोचरतां गता । सम्माननीयः सम्पादकवर्यः बेन्झियोनः स्वमित्रैः सह विपण्याम् इतस्ततः सञ्चरन् पत्रिकायाः सप्तपञ्चाशत् प्रतिकृतीः विक्रेतुं समर्थः अभवत् ! सत्यमेव तद्दिने नगरे सा एव वार्ता आसीत् सर्वत्र !

महता उत्साहेन कृतकृत्यताभावेन च गृहं प्रविशन्तं पुत्रं बेन्यहूदः दृष्टवान् । तस्य दृष्टौ कः भावः आसीत् इति अवगन्तुं प्रयत्नं कृतवान् बेन्झियोनः । पुत्रेण कृतस्य साहसस्य विषये बेन्यहूदस्य मनसि यद्यपि महान् अभिमानः आसीत्, तथापि तस्य प्रयोगसाधुत्वं नास्ति इति सः सम्यक् जानाति स्म । अतः सः पुत्रम् उक्तवान् - "वत्स, पत्रिकासञ्चालनं नाम न बालचेष्टितम् । त्वम् इतोऽपि बालः । कृत्याकृत्यविवेकः नास्ति तव । तव 'प्राचीनयहूद्य-साम्राज्यस्य सीमानः' इत्येषः लेखः नितरां विवादास्पदं भवति । जागरूकः भव । प्रकृतं मास्तु पुनः तादृशं दुस्साहसम् । अग्रेऽपि यावदहं न कथयामि

 


तावत् आत्मानं न प्रवर्तय एतादृशेषु दुस्साहसेषु ।......"

इत्थं च प्रथमाङ्कप्रकाशनेन एव बेन्झियोनस्य पत्रिकासञ्चालनकार्यं समाप्तिं गतम् । तेषु एव दिनेषु नगरे अन्यविधः कश्चन कोलाहलः प्रवृत्तः यत्र केषाञ्चित् मारणम् अपि अभवत् । सर्वेषामपि अवधानं तत्र अकृष्टम् अभवत् इत्यतः बेन्झियोनः अपि न तथा खेदम् अनुभूतवान् पत्रिकासञ्चालन-स्थगनेन । तथापि पितुः पन्थानमेव अनुसरता एकादशवर्षीयेण पुत्रेण तेन कृतं साहसं तु इतिहासस्य पृष्ठेषु उल्लिखितम् अभवत् ।

* * *

# १६. कारावासः

डेबोरायाः जननानन्तरं बेन्यहूदस्य गृहे पुनरपि शान्तिः प्रतिष्ठापिता अभवत् । शिशोः रोदनध्वनिना मुखरितस्य तस्य गृहस्य वायुमण्डलं पुलकितमिव अभवत् । येमिमाबेन्झियोनौ अपि नितरां सन्तुष्टौ आस्ताम् । बेन्यहूदः सन्तृप्त्या स्वीयेषु कार्येषु मग्नः आसीत् । परन्तु ततः अल्पेन एव कालेन अन्योऽपि सङ्कटमयः प्रसङ्गः समुपस्थितः अभवत् ।

बेन्यहूदस्य श्वशुरः योनसः पुत्रीं प्रापयितुम् इस्त्रेल्देशम् आगतः दीर्घकालं यावत् तत्र एव न्यवसत् । वस्तुतः आरम्भदिनेषु बेन्यहूदस्य मनसि हीब्रूभाषाविषये प्रीतिः श्रद्धा वा तत्कारणादेव उत्पन्ना आसीत् । योनसस्य हीब्रूज्ञानमपि उत्तमम् आसीत् । जेरूसलेंनगरं प्रति आगमनानन्तरं बेन्यहूदस्य सहवासेन तेन सह निरन्तरव्यवहारेण च तस्य भाषाज्ञानम् इतोऽपि विकसितम् अभवत् । बेन्यहूदोऽपि तं कार्ये योजयितुम् इच्छन् तस्मै पत्रिकायाः सम्पादकीये विभागे कार्यं दत्तवान् । योनसः उत्साहेन एव तत् उत्तरदायित्वं निरवहत् । मुद्रणाय सज्जीक्रियमाणानां पृष्ठानाम् अक्षरत्रुटिसंशोधनादिकं सः शीघ्रमेव ज्ञातवान् । पत्रिकायाः पृष्ठपूरणाय मध्ये मध्ये अत्यन्तं संक्षिप्तानां लेखानाम् आवश्यकता भवति स्म । तादृशान् लेखान् अपि सः लिखितवान् । बेन्यहूदः अपि तेन सन्तुष्टः अभवत् ।

कदाचित् आन्दोलनसम्बन्धिकार्ये भागं ग्रहीतुं बेन्यहूदेन पक्षं यावत् अन्यत्र प्रवासः करणीयः अभवत् । तदा सः आत्मना सह पत्नीं हेम्डां पुत्रीं डेबोरां च नीतवान् आसीत् । तेषु दिनेषु पत्रिकाप्रकाशनस्य पूर्णम् उत्तरदायित्वं सः श्वशुरस्य स्कन्धयोः निक्षिप्तवान् । वस्तुतः तेषु दिनेषु तत्र अधिकारे स्थितेन टर्क्शासनेन पत्रिकाभ्यः पूर्णं स्वातन्त्र्यं न दत्तम् आसीत् । शासनस्य विरोधरूपेण किमपि प्रकाशयितुं पत्रिकाणाम् अनुमतिः न आसीत् । पत्रिकासु प्रकाशिताम् एकैकाम् अपि पङ्क्तिम् अत्यन्तं सूक्ष्मेक्षिकया परिशीलयन्ति स्म शासकीयाः अधिकारिणः । तत्र आक्षेपार्हं किमपि पश्यन्ति चेत् सम्पादकं

विरुध्य अभियोगं कर्तुं ते साधिकाराः आसन् । अतः बेन्यहूदः अतीव जागरूकतया एव पत्रिकायाः सम्पादकीयम् अन्यान् लेखान् वा परिशील्य प्रकाशयति स्म । प्रवासाय गमनसमये तद्विषये श्वशुरं पुनरपि स्मारयित्वा एव गतवान् सः ।

बेन्यहूदस्य अनुपस्थितौ योनसः जागरूकतया एव पत्रिकायाः सम्पादनकार्यं कृतवान् । तेषु दिनेषु 'हनुख्खा'नामकं पर्व सन्निहितम् आसीत् । तस्मिन् पर्वणि दीपपूजायाः परम्परा आसीत् । तदेव मनसि निधाय योनसः महता प्रयत्नेन उत्तमम् एकं लेखं सज्जीकृतवान् । लेखस्य अन्ते सः वाचकान् उद्दिश्य एवं लिखितवान्– ''वयं सन्नद्धाः भवेम । स्वीयं सामर्थ्यम् एकत्रीकृत्य अग्रे सराम'' इति । निश्चिते दिने पत्रिकायाः प्रकाशनम् अभवत् ।

अधुनापि बेन्यहूदस्य अनेके विरोधिनः आसन् एव । ते कथमपि तस्य वर्धमानस्य प्रभावस्य निरसने यत्नशीलाः एव आसन् । तदर्थम् उचितम् अवसरं प्रतीक्षमाणाः अपि आसन् । बेन्यहूदस्य अनुपस्थितौ योनसस्य सम्पादकत्वे प्रकाशितां पत्रिकां स्वीकृत्य प्रतिपृष्ठं प्रतिपङ्क्ति प्रत्यक्षरं जागरूकतया ते पठितवन्तः । योनसस्य लेखस्य अन्तिमं वाक्यद्वयं यदा पठितं तदा ते चिन्तितवन्तः यत् 'अत्र अस्ति कश्चन अंशः येन वयं बेन्यहूदस्य तेजोवधं कर्तुं शक्नुयाम' इति । अतः ते सर्वे झटिति पत्रिकां स्वीकृत्य तेषां धर्मगुरूणां समीपं गतवन्तः ये च बेन्यहूदस्य हीब्रूभाषायाः व्यावहारिकभाषारूपेण प्रचारकार्यम् अधर्मं मन्यन्ते स्म । ते सर्वे तत्र सुदीर्घकालं यावत् तां पत्रिकां गृहीत्वा समालोचनं कृतवन्तः । काञ्चित् रणनीतिम् अपि चिन्तितवन्तः । ततः धर्मगुरूणां कश्चन गणः शासकीयाधिकारिणां मेलनाय अगच्छत् ।

तदा शासनं कुर्वतः सुल्तान-अब्दुलहमीदस्य (द्वितीयः) आधीन्ये स्थिताः तुर्कीयाः अधिकारिणः सर्वेभ्यः अपि यहूद्येभ्यः असूयन्ति स्म । 'एते यहूद्याः यदा कदा वा जागरिताः भवेयुः, स्वतन्त्रताम् इच्छन्तः सङ्घर्षं च कुर्युः' इति तेषां मनसि भीतिः आसीदेव । हीब्रू-आन्दोलनेन यहूद्यानां सङ्घटनं जायमानम् अस्ति इत्येतदपि तैः अवलोकितम् आसीत् । अतः

आन्दोलनस्य नेतारं बेन्यहूदं दमयितुं तेऽपि अवसरं प्रतीक्षमाणाः एव आसन् । धर्मगुरवः तान् एव अधिकारिणः दृष्ट्वा तेभ्यः पत्रिकायाः लेखं प्रदर्शितवन्तः । तत्र प्रकाशितं वाक्यद्वयं स्वराघातपूर्वकं वाचितवन्तः – "वयं सन्नद्धाः भवेम । स्वीयं सामर्थ्यम् एकत्रीकृत्य अग्रे सराम !"

"अस्य कः अर्थः .... ? वयं सर्वे किंनिमित्तं सज्जाः भवेम ... ? युद्धार्थमेव खलु ? स्वसामर्थ्यस्य एकत्रीकरणं नाम सायुधस्य सैन्यस्य सङ्घटनम् इत्येव खलु ध्वनितार्थः । अग्रे सरणं कुत्र ... ? चक्रवर्तिनं विरुद्ध्य युद्धार्थम् ..... ! एषः एव खलु अस्य अर्थः ... ? तन्नाम सम्पादकः बेन्यहूदः स्वपत्रिकामाध्यमेन सर्वान् अपि यहूद्यान् चक्रवर्तिनं विरुद्ध्य युद्धाय प्रेरयन् अस्ति ।" – इति तस्य वाक्यद्वयस्य व्याख्यानं कुर्वद्भिः तैः धर्मगुरुभिः अधिकारिणां मनसि दुर्भावना उत्पादिता । "यदि इदानीमेव तस्य निग्रहणं न क्रियेत तर्हि अग्रे महान् क्लेशः भवेत्" इत्यपि स्मारितवन्तः ते । अधिकारिणः अपि तत् अङ्गीकृत्य झटिति एव बेन्यहूदस्य निग्रहणोपायं चिन्तितवन्तः ।

* * *

प्रवासात् प्रतिनिवर्तनात्पूर्वमेव बेन्यहूदः श्वशुरेण सम्पाद्य प्रकाशितायाः स्वपत्रिकायाः प्रतिकृतिं प्राप्तवान् । कुतूहलेन ताम् आमूलचूलं पठितवान् च । तत्र आक्षेपार्हः अंशः कोऽपि नास्ति इति पौनःपुन्येन पठनेन निश्चित्य सन्तृप्त्या निःश्वसितवान् । प्रतिनिवर्तनानन्तरं सः तन्निमित्तं श्वशुरं योनसम् अभिनन्दितवान् अपि ।

ततः चतुर्णां दिनानाम् अनन्तरं प्रातःकाले बेन्यहूदः मुद्रणालयगमन-सज्जतायाम् आसीत् । हेम्डा पुत्रीं लालयन्ती आसीत् । तदा एव किञ्चित् वाहनं गृहस्य पुरतः आगत्य स्थितम् । ततः अवतीर्णाः पञ्चषाः जनाः साक्षात् गृहं प्रविष्टवन्तः । ते सर्वे शासकीयाः आरक्षकाः इति तेषां समवस्त्रदर्शनेन एव ज्ञायते स्म । तेषां प्रमुखः बेन्यहूदस्य पुरतः स्थित्वा उक्तवान् – "अस्मिन् एव क्षणे भवता मया सह प्रस्थातव्यम् ... ।"

तस्य वचनं श्रुत्वा महतीं विपत्तिं शङ्कमाना हेम्डा बहिः आगत्य उक्तवती

- "तं किमर्थं नयन्ति ? कः अपराधः कृतः तेन ...?" इति ।

"प्रिये ! भीता मा भवतु । अहं तेषां कार्यालयं गत्वा झटिति एव प्रत्यागच्छामि । मया तु कोऽपि अपराधः न कृतः । अतः कथं मां निगृह्णन्ति ते । भवती निश्चिन्ता भवतु" इति उक्त्वा प्रावारकं शिरस्त्रं च धृत्वा बेन्यहूदः तैः सह गतवान् । हताशतया उपविष्टवती हेम्डा ।

यद्यपि 'अहं झटिति एव प्रत्यागच्छामि' इति बेन्यहूदः उक्तवान् आसीत् तथापि हेम्डायाः मनः 'अद्य अप्रियमेव किमपि श्रोतव्यं भवति' इति शङ्कते स्म । असहनया क्षणगणनां कृतवती सा । परं घण्टाः अतीताः चेदपि पतिः न प्रत्यागतः एव । तस्याः धैर्यं विनष्टम् । सा आपद्बान्धवाय निस्सिंबेहराय वार्तां प्रेषितवती । परन्तु निस्सिं बेहरः गृहे नासीत् । विचारणात् ज्ञातं यत् सोऽपि बेन्यहूदस्य बन्धनवार्तां कथमपि ज्ञात्वा अनुपदमेव आरक्षकालयं प्रति गतवान् इति । तत् ज्ञात्वा हेम्डा किञ्चिदिव आश्वस्ता अभवत् ।

सायङ्कालपर्यन्तमपि न कापि वार्ता प्राप्ता । प्रदोषकाले गृहद्वारे दृष्टः निस्सिं बेहरः एकः एव । सः अवदत् - "दीर्घकालं यावत् बेन्यहूदस्य विचारणा कृता अधिकारिभिः । लेखस्य तदेव वाक्यद्वयं तम् अपराधिनम् अकरोत् । यद्यपि सः लेखः बेन्यहूदेन न लिखितः, परन्तु ते तत् नाङ्गीकुर्वन्ति । पत्रिकायां प्रकाशितस्य प्रतिवाक्यम् अपि उत्तरदायित्वं सम्पादकस्य एव । अतः सः दण्डनार्हः एव इति तेषां निर्णयः । भवती भीता मा भवतु । श्वः प्रातःकाले सः प्रतिनिवर्तिष्यते एव" इति ।

बेन्यहूदः कारागारे बद्धः इति वार्तां श्रुतवत्याः हेम्डायाः अधःस्थिता भूमिः एव विदीर्णा इव । तस्यां रात्रौ सा निमेषमात्रमपि निद्रां न प्राप्तवती । मध्यरात्रे आगतः कश्चन अपरिचितः तां स्वपरिचयं वदन् उक्तवान् - "भगिनि ! अहं बेन्यहूदवर्यस्य अभिमानिषु अन्यतमः । वृत्त्या शाकविक्रयिकः अहम् । कारागारं प्रत्यपि शाकानि ददामि अहम् । अद्य सायं तत्र गतवता मया बेन्यहूदवर्यस्य बन्धनवार्ता श्रुता । तत्र कथमपि तत्रत्यस्य रक्षकस्य अनुमतिं प्राप्य मया यहूदवर्यः दृष्टः । 'कोऽपि सन्देशः अस्ति किम् ?' इति पृष्टः अपि ।..."

हेम्डा उत्कर्णा सती श्रुतवती । सः कथनम् अनुवर्तितवान् – "तदा क्षणं विचिन्त्य सः माम् उक्तवान् – 'मित्र ! मम पत्नी वक्तव्या यत् 'झटिति समग्रस्य गृहस्य स्वच्छतां करोतु । अनिरीक्षितरूपेण अतिथीनाम् आगमनस्य सम्भावना अस्ति' इति । एषः एव तस्य सन्देशः" इति ।

हेम्डा पत्युः सन्देशमेव पुनः पुनः मनसि उच्चारितवती । कः सन्देशः एषः ? के अतिथयः आगच्छेयुः ... ?' किञ्चित्कालानन्तरं सा पत्युः सन्देशम् अवगतवती । अतः सा तस्मै धन्यवादं समर्पयन्ती उक्तवती – "बन्धो ! कृपया मम पतिं वदतु यत् 'मया भवतः सन्देशः प्राप्तः । अहं तथैव अनुसरामि' इति ।"

"अस्तु, तथैव वदामि" इत्युक्त्वा सः ततः प्रस्थितवान् ।

तस्य निर्गमनानन्तरं हेम्डा झटिति उत्थाय गृहे स्थितानि बेन्यहूदस्य व्यवहारसम्बन्धीनि सर्वाणि पत्राणि एकत्र संगृहीतवती । तानि सर्वाणि एकस्यां पेटिकायां पूरयित्वा पेटिकां प्रतिवेशिगृहं नीत्वा तत्र स्थापितवती । गृहम् आगच्छन्ती चिन्तितवती – 'गृहस्य स्वच्छता तु कृता । अतिथयः कदा आगमिष्यन्ति ... ?' इति ।

परेद्यवि प्रातः एव द्वित्राः अधिकारिणः हेम्डायाः गृहद्वारे शब्दं कृतवन्तः । द्वारे उद्घाटिते सति साक्षात् अन्तः प्रविश्य सर्वत्र अन्वेषणम् आरब्धवन्तः ते । तत्र तत्र लब्धानि सर्वाणि कागदानि द्वित्राः सञ्चिकाश्च स्वीकृत्य ततः गतवन्तः । हेम्डा अन्तरङ्गे एव हसितवती ।

* * *

# १७. कस्यापराधः, कस्मै दण्डनम् !

अपराह्णे अपरः कश्चन सन्देशवाहकः आगतवान् । सः बेन्यहूदस्य सन्देशं श्रावितवान् – 'अहं कुशली अस्मि । चिन्ता न करणीया । मम बन्धविमुक्तये सर्वेऽपि सुहृदः तीव्रं प्रयत्नं कुर्वन्तः सन्ति । द्वित्रदिनाभ्यन्तरे एव अहं प्रत्यागमिष्यामि' इति ।

परन्तु हेम्डायाः तु तुर्किशासनविषये विश्वासः सर्वथा न आसीत् । ते तावच्छीघ्रं तं बन्धविमुक्तं न कुर्युः इत्येव तस्याः अन्तरङ्गं वदति स्म । अतः सा पत्युः विमुक्तये मयापि प्रयत्नः करणीयः इति निश्चयं कृतवती । प्रथमं सकृत् तस्य दर्शनं वा करणीयम् इत्यपि निश्चित्य तस्यामेव सन्ध्यायां पत्युः केनचित् मित्रेण सह कारागारं गतवती ।

यदा ताभ्यां कारागारं प्राप्य विचारितं तदा तत्रत्यः द्वारपालकः स्पष्टशब्दैः उक्तवान् – "सूर्यास्तस्य अनन्तरं कस्यापि बन्धिनः दर्शनाय अनुमतिः नैव भवति..." इति ।

"इमां वराकीं दृष्ट्वा वा किञ्चित् करुणां दर्शयतु मित्र .. !" – हेम्डया सह गतः सः बन्धुः अवदत् ।

"अहं न किमपि कर्तुं शक्नोमि । मध्यरात्रसमये कारागारस्य प्रधानः पर्यवेक्षकः आगमिष्यति पर्यवेक्षणाय । तं पृच्छतु" – सः द्वारपालकः अवदत् ।

अन्ते च हेम्डया दत्तानि कानिचित् नाणकानि तस्य मनःपरिवर्तने समर्थानि अभवन् । अत्यल्पं कालं यावत् पत्युः दर्शनाय सा तेन अनुमता । अन्तः प्रवेशिता च ।

कारागारस्य अन्तः अयःशलाकानां पृष्ठतः स्थितवन्तं सामान्यचोरमिव लुण्ठाकमिव वा बन्धने स्थापितं स्वपतिं दृष्टवत्याः हेम्डायाः दुःखस्य पारम् एव नासीत् । बेन्यहूदः एव तस्याः समाधानं कृतवान् । दुःखं निगृह्य यावत् ताभ्यां सम्भाषणस्य आरम्भः कृतः तावता एव कारागारस्य रक्षकः –

"समयः अतीतः । अधुना प्रस्थातव्यम्" इति हेम्ड़ाम् अनुरुद्धवान् । वराकी सा अनन्यगतिकतया ततः प्रस्थितवती पत्युः अनुमतिं स्वीकृत्य ।

* * *

निस्सिंबेहरः बेन्यहूदस्य बन्धमोक्षाय सर्वविधमपि उपायं चिन्तयन् तन्निमित्तमेव अहोरात्रं कार्यमग्नः आसीत् । सः एतद्विषये बेरनूरोथ्स् चैल्डाय विस्तरेण पत्रं लिखितवान् । सः यदि टर्क्शासनाय पत्रं लिखति तर्हि बेन्यहूदस्य मोक्षः सुखेन भवेत् इति तस्य आशयः आसीत् । अधिकारिभिः सह निरन्तरं सम्पर्कं रक्षितवान् सः । कदाचित् तस्य एतादृशैः प्रयत्नैः कुपितः कश्चन अधिकारी तं पृष्टवान् – "किं भवान् अपि बेन्यहूदः इव कारागारे स्थातुम् इच्छति ?" इति ।

तदा निस्सिं बेहरः उक्तवान् – "यदि बेन्यहूदस्य मोक्षः भविष्यति तर्हि तन्निमित्तम् अहं स्वयमेव कारागारं गन्तुमपि सज्जः अस्मि । यतः अहं जानामि बेन्यहूदस्य महत्त्वम्" इति । सः अधिकारी विस्मितः अभवत् ।

ततः निस्सिं बेहरः बेन्यहूदस्य बन्धनवार्तां सर्वत्र प्रसारितवान् । बेन्यहूदस्य अभिमानिषु जनेषु अनुरोधं कृतवान् यत् ते सर्वे 'बेन्यहूदः बन्धमुक्तः करणीयः' इति अनुरोधपूर्विकां तन्त्रीवार्तां शासनाय प्रेषयेयुः इति । तस्य महान् प्रभावः दृष्टः । अल्पकालाभ्यन्तरे एव देशस्य नानाभागेभ्यः सहस्राधिकाः तन्त्रीवार्ताः शासनं प्राप्नुवन् । सर्वत्र एकः एव अनुरोधः – 'निरपराधः बेन्यहूदः बन्धमुक्तः क्रियताम्' इत्येव ।

बेन्यहूदस्य बन्धविमुक्तये अपेक्षितान् व्यवहारान् कर्तुं मध्ये मध्ये अधिकारिभ्यः उत्कोचं दातुं च महतः धनराशेः आवश्यकता अपि अनुभूता । तदर्थं निस्सिं बेहरः कञ्चित् निधिं संस्थापितवान् । ततश्च 'आर्थिकसाहाय्यं कुर्वन्तु' इति जनान् प्रार्थितवान् अपि । इदानीम् अपि जनेभ्यः उत्तमः प्रतिस्पन्दः आगतः । धनिकाः, सामान्याः, निर्धनाः चेति सर्वेऽपि यहूद्याः अभिमानिनश्च स्वीयेन योगदानेन तं निधिं पोषितवन्तः । निस्सिं बेहरः द्विगुणितेन उत्साहेन मित्रस्य बन्धमोक्षाय कार्याणि अनुवर्तितवान् ।

कारागारे बेन्यहूदः प्रथमदिने तु अन्यैः पञ्चदशभिः बन्दिभिः सह

कस्मिंश्चित् लघुप्रकोष्ठे स्थापितः आसीत् । तत्र पर्याप्तमात्रेण प्रकाशः न आसीत् । वायोः अपि अभावः आसीत् । भित्तेः उपरिभागे स्थितात् एकस्मात् रन्ध्रात् केवलं वायुः वाति स्म । अन्यानि वातायनानि तु नैव आसन् । बेन्यहूदस्य श्वासोच्छ्वासस्य अपि क्लेशः आसीत् इत्यतः सः आदिनं तस्य रन्ध्रस्य अभिमुखमेव स्वमुखं संस्थाप्य तिष्ठति स्म येन प्राणवायुसेवनं वा पर्याप्तमात्रेण भवेत् । तस्मिन् दिने तस्मै यः आहारः दत्तः सोऽपि अत्यन्तम् असमीचीनः आसीत् । तथापि बेन्यहूदः कथमपि सोढवान् । हेम्डा निस्सिं बेहरश्च एतत् ज्ञात्वा नितरां खिन्नौ जातौ ।

परेद्यवि ताभ्यां कारागृहस्य वैद्यः दृष्टः । प्रभूतोत्कोचदानेन सः प्रार्थितः यत् 'कथमपि बेन्यहूदस्य वासव्यवस्था अन्यत्र करणीया इति कारागृहस्य अधिकारिणः सूचनीयाः' इति । सः वैद्यः बेन्यहूदं परीक्ष्य अधिकारिणः निवेदितवान् यत् 'सः क्षयरोगी इत्यतः अन्यैः सह तस्य स्थापनं नोचितम् । तेन तस्य प्राणापायः अपि अस्ति । अन्यच्च तेन अन्येषां बन्धिनामपि कष्टं भवेत्' इति ।

वैद्यस्य इयं सूचना सफला जाता । अनन्तरदिने एव तम् एकमेव पृथक् प्रकोष्ठे स्थापितवन्तः । तस्मिन् दिने रात्रौ पतिं द्रष्टुं कारागृहं गतवती हेम्डा तन्निमित्तं चायं कर्तुम् एकां चुल्लिं नीतवती । लेखनसामग्रीमपि नीत्वा दत्तवती । तेन नितरां सन्तुष्टः अभवत् बेन्यहूदः । सः पत्न्याः अन्तरङ्गे धैर्यं पूरयन् अवदत् - "प्रिये ! चिन्तां न करोतु । द्वित्रदिनाभ्यन्तरे एव अहं प्रतिनिवर्तिष्ये... ।"

परन्तु हेम्डायाः तद्विषये विश्वासः न आसीत् । सा अवदत् - "यदि ततोऽपि अधिककालं स्थातव्यं भवेत् ... ?"

"का चिन्ता... ? तदा तु अहम् अत्रैव मम कोषनिर्माणकार्यम् अनुवर्तयिष्यामि । यतः अत्र मम कार्यान्तरमपि नास्ति । तेन मम समयोऽपि सुखेन यापितः भविष्यति ..." - बेन्यहूदः उक्तवान् ।

रात्रौ कारागृहात् प्रतिनिवर्तनसमये हेम्डा अपूर्वम् एकं दृश्यं दृष्टवती । क्रीडितुं गृहात् बहिः आगतं बेन्झियोनं परितः दशाधिकाः बालाः नृत्यन्तः

आसन् । ते बेन्यहूदस्य विरोधिनां बालाः इति दूरादेव हेम्डा अभिज्ञातवती । ते च बालाः उच्चैः रागसहितं च गायन्तः आसन् -

"ते पिता मूर्खः ... ।
कारायां बद्धः ... ।
तस्य तदेवोचितम् ... ।
पापस्य दण्डनम् !
स तत्रैव तिष्ठतु ...
कदापि बहिर्नागच्छतु ... !"

क्षणाभ्यन्तरे ते बालाः बेन्झियोनं ताडयितुम् अपि उद्युक्ताः । हस्तेन तस्य शिरसि प्रहारं कृतवन्तः । तदा एव तत्र आगतवती हेम्डा तान् तथाविधान् दृष्ट्वा कोपेन आक्रुष्टवती - "किमिदम् अकार्यं कुर्वन्ति भवन्तः हे मूर्खाः...!" इति ।

तस्याः रौद्रावतारं दृष्ट्वा भीताः सर्वे बालाः ततः पलायिताः । मातरं दृष्ट्वा अश्रूणि स्त्रावयन् बेन्झियोनः अवदत् - "अम्ब ! पुनरपि मां पीडयिष्यन्ति एते .. ।"

हेम्डा तस्य सान्त्वनं कृतवती । उक्तवती च - "इतः परं कानिचित् दिनानि मम अनुपस्थितौ एकाकी एव मार्गं न आगच्छतु । दुष्टाः एते किमपि कुर्युः ..." इति ।

"परन्तु अम्ब ...!" तन्मध्येऽपि नेत्रयोः कान्तिं प्रकाशयन् बेन्झियोनः उक्तवान् - "तातः एतत् प्रकरणं ज्ञात्वा अतीव सन्तुष्टः भवेत् ...!"

"किमर्थं तथा वदति वत्स ... ?" - कुतूहलेन हेम्डा पृष्टवती ।

"ते माम् उद्दिश्य यत् यत् उक्तवन्तः, यत् गीतं च गीतवन्तः तत्र एकैकः शब्दः अपि हीब्रूभाषायाः एव आसीत् .. !"

"तत्तु सत्यमेव । परन्तु ते हीब्रूभाषया एव सर्वमपि उक्तवन्तः यत् तस्य अन्यदेव कारणम् अहम् ऊहे ।"

"किं तत् ...?"

"प्रायः तेषाम् आशयः एषः स्यात् यत् तैः कथ्यमानम् एकैकमपि शब्दं

भवान् अवश्यम् अवगच्छेत् । यदि अन्यभाषया कथ्यते तर्हि कदाचित् भवान् नावगच्छेत् इति ।''

''कथमपि भवतु नाम । सर्वेऽपि ते हीब्रूभाषया एव उक्तवन्तः खलु। तावता वा सन्तुष्टः भवतु तातः ..'' इति ज्येष्ठः इव अवदत् बेन्झियोनः ।

* * *

सप्ताहानन्तरं न्यायालये बेन्यहूदस्य विचारणा निश्चिता अभवत् । तस्मिन् दिने प्रातः एव आरक्षकाः तं बन्धिनम् इव न्यायालयं नीतवन्तः । न्यायालयस्य पुरतः तस्य अभिमानिनां महान् गणः एव उपस्थितः आसीत् । ते सर्वे दूरादेव बेन्यहूदं दृष्ट्वा - 'विजयतां बेन्यहूदः' इति अभिनन्दितवन्तः । प्रायः तावत्या एव सङ्ख्यया विरोधिनां गणः अपि समुपस्थितः आसीत् । ते तु तं दृष्ट्वा - 'धिक् धर्मद्रोहिणम्' इति अवदन् ।

बेन्यहूदः कमपि प्रतिस्पन्दम् अप्रकटयन् अग्रे गतवान् । दर्शनादेव एतत् स्फुटं ज्ञायते स्म यत् अभिमानिनां गणे युवानः एव आसन्, विरोधिनां गणे तु षष्ट्यधिकवर्षवयस्काः वृद्धाः एव आसन् ।

त्रयाणां न्यायाधीशानां कश्चन गणः बेन्यहूदस्य विचारणे नियुक्तः आसीत् । तेषु अन्यतमः यहूद्यः अन्यौ च अरब्बीयौ ।

आरम्भे बेन्यहूदस्य पक्षतः अधिवक्ता विषयोपस्थापनं कृतवान् । सः 'दि डीर्' पत्रिकायाः तं विवादास्पदीभूतम् अङ्कं पुरतः संस्थाप्य तत्र योनसेन लिखितं सम्पादकीयं प्रदर्श्य तस्य अरब्बीभाषया अनुवादम् अपि कृत्वा उक्तवान् - ''वयं सन्नद्धाः भवेम । स्वीयं सामर्थ्यम् एकत्रीकृत्य अग्रे सराम !' अस्य वाक्यस्य न कोऽपि विशिष्टः अर्थः । सर्वेषाम् अस्माकम् अग्रेसरणं भवतु इत्येव तस्य तात्पर्यम् ।''

''अस्मात् वाक्यात् युद्धगन्धः कथमपि नागच्छति'' इत्यपि सः प्रतिपादितवान् ।

परन्तु अरब्बीयसर्वकारपक्षतः वादं कुर्वन् अधिवक्ता तु एतम् अभिप्रायं खण्डयन् अस्य वाक्यस्य 'युद्धसन्नाहः करणीयः, युद्धार्थम् अग्रे गन्तव्यम् इत्येव अर्थः' इति प्रतिपादितवान् ।

द्वयोरपि अधिवक्त्रोः वादं श्रुतवतां न्यायाधीशानां मनसि कोऽपि निर्णयः एव नागतः । तौ अरब्बीयौ न्यायाधीशौ उभाभ्याम् अपि पक्षाभ्याम् उत्कोचं स्वीकृतवन्तौ आस्ताम् इत्यतः किमपि अवदन्तौ मौनमेव आश्रितवन्तौ । यहूद्यः न्यायाधीशः तु किङ्कर्तव्यतामूढः जातः । ततः त्रयः अपि बहुकालपर्यन्तं समालोचनं कृत्वा अन्ते निर्णयं श्रावितवन्तः - "बेन्यहूदेन अपराधः एव कृतः अस्ति । अतः तेन वर्षं यावत् कारागृहवासः अनुभोक्तव्यः । सर्वस्याः अस्याः समस्यायाः मूलं तदीया 'दि डीर्'पत्रिका अस्मात् क्षणात् एव स्थगिता करणीया" इति ।

न्यायालयेन एतदपि घोषितं यत् 'बेन्यहूदः यदि इच्छति तर्हि सः एतद्विषये उच्चन्यायालये अभियोगं कर्तुम् अर्हति । अन्यच्च तावत्पर्यन्तं यदि कस्यचित् वरिष्ठस्य नागरिकस्य प्रतिभूत्वम् अस्ति तर्हि सः अद्य एव स्वगृहं प्रतिनिवर्तितुम् अर्हति । यदि तादृशं प्रतिभूत्वं प्राप्तुम् असमर्थः भवति तर्हि पुनरपि तेन कारागृहवासः एव अनुभोक्तव्यः' इति ।

वार्तामिनां श्रुत्वा तत्र उपस्थितेषु बहवः तस्मै प्रतिभूत्वं प्रदातुम् अग्रे आगताः । निस्सिं बेहरस्तु तदर्थं पादाग्रेणैव स्थितः आसीत् । परन्तु न्यायालयः तेषु कस्यापि प्रतिभूत्वं न अङ्गयकरोत् । यतः तेषु कोऽपि सुमहत्याः स्थिरसम्पदः स्वामी न आसीत् । अतः आरक्षकाः तं पुनरपि कारागृहं नेतुम् उद्युक्ताः अभवन् । परन्तु तदा एव श्लोमो अमेल्नामकः कश्चन महाधनिकः यहूद्यः प्रतिभूत्वप्रदानाय अग्रे आगतवान् । समाजे तस्य महत् स्थानमपि आसीत् । न्यायालयः तस्य प्रतिभूत्वम् अङ्गीकृत्य बेन्यहूदं बन्धमुक्तम् अकरोत् ।

बहिः आगतं तं दृष्ट्वा तत्र उपस्थितः तस्य अभिमानिनां समूहः उच्चैः कण्ठेन स्वागतम् अकरोत् । विरोधिनां मुखानि तु विच्छायानि अभवन् । परममित्रेण निस्सिं बेहरेण सह बेन्यहूदः गृहम् आगतवान् ।

* * *

# १८. नान्यत् किमपि ऋते शब्देभ्यः !

वस्तुतः 'दि डीर्' पत्रिका बेन्यहूदस्य प्राणायते स्म । तां विना तस्य जीवनमेव अत्यन्तं दुर्भरं जातम् । हीब्रूसम्बन्धिनः आन्दोलनस्य कार्यवर्धनाय विदेशेषु प्रवासः वा करणीयः इति तेन चिन्तितम् । परन्तु न्यायालयेन तस्य नगरात् बहिर्गमनं निषिद्धम् आसीत् । न केवलं तावत्, नगरेऽपि सर्वत्र स्वतन्त्रतया अटितुं सः न अनुमतः आसीत् । यत्र कुत्रापि गमनसमये केऽपि माम् अनुसरन्तः सन्ति इत्येवम् अनुभवं सः प्राप्नोति स्म ।

एतस्मात् क्लेशात् मोक्षं प्राप्तुं बेन्यहूदः तन्मित्राणि च उच्चन्यायालये अभियोगं कर्तुं निर्णीतवन्तः । तन्निमित्तं प्रयत्नान् अपि आरब्धवन्तः । सः उच्चन्यायालयः तु आसीत् सिरियादेशस्थे बेरुत्नगरे । अतः सः व्यवहारः अत्यन्तं व्ययसाध्यः अपि आसीत् । तथापि निस्सिंबेहरः तदर्थम् उद्युक्तः अभवत् । 'व्यवहारं सञ्चालयितुम् अपेक्षितं व्ययं निर्वोढुं धनसाहाय्यं कुर्वन्तु' इति यहूद्यबन्धून् सः निवेदितवान् । नैतिकदृष्ट्या बेन्यहूदस्य समर्थनं कर्तुमपि तेन सर्वे प्रार्थिताः ।

विरोधिनः अपि तमेव उपायम् आश्रितवन्तः । 'धर्मद्रोहिणं दण्डयितुम्' (!) ते सर्वेषां साहाय्यं प्रार्थितवन्तः । बेन्यहूदस्य पोषकतया विरोधितया पत्राणां धनस्य च प्रवाहः एव जातः । उभयपक्षीयाः अपि जानन्ति स्म यत् कोट्यधीशः बेरन् रोथ्स्चैल्डः यस्य पक्षस्य आश्रयदाता भवति तस्य एव पक्षस्य जयः भवति इति । अतः फ्रान्स्देशे प्यारिस्नगरे निवसते तस्मै ते निरन्तरं पत्राणि अलिखन् । परन्तु बहुकालपर्यन्तं ततः किमपि प्रत्युत्तरमेव नागतम् । अन्ते च विरोधिनः ततः एकां तन्त्रीवार्तां प्राप्तवन्तः, यत्र एतावदेव लिखितम् आसीत् – 'भवन्तः स्वीयेषु पूजादिषु धार्मिककार्येषु मनः प्रवर्तयन्तु' इति । 'तदितरेषु एतादृशेषु नैव' इति ध्वनितार्थं ज्ञात्वा ते सर्वे हतप्रभाः जाताः ।

* * *

एषु दिनेषु बेन्यहूदः स्वीयं पूर्णमपि अवधानं कोषनिर्माणकार्ये केन्द्रितं

कृतवान् । दिने अष्टादश नवदश वा घण्टाः अविरतं सः स्थित्वा एव कोषकार्ये मग्नः भवति स्म । तदनुकूलाम् एकाम् उन्नताम् उत्पीठिकां कारयित्वा तदुपरि पुस्तकानि प्रसार्य पार्श्वे स्थित्वा दिवारात्रं कार्यं करोति स्म सः । अधुना शीतकालः सन्निहितः आसीत् । परन्तु आर्थिकपरिस्थितिः नितरां शोचनीया आसीत् इत्यतः बेन्यहूदः अपेक्षितानि उष्णवस्त्राणि क्रेतुमपि समर्थः नासीत् । गृहस्य उष्णतां रक्षितुम् अपेक्षितम् इन्धनमपि व्यवस्थापयितुं सः शक्तः न आसीत् । पुरातनानि छिन्नानि च पञ्चषाणि वस्त्राणि एकस्य उपरि एकमिति क्रमेण धृत्वा तत्परिवारजनाः कथमपि शैत्यं सोढवन्तः ।

कस्मिंश्चित् सुप्रभाते निस्सिं बेहरः शुभवार्तां श्रावितवान् बेन्यहूदस्य गृहम् आगत्य । तस्य हस्ते तदानीमेव आगतं पत्रम् आसीत् । तच्च पत्रम् आसीत् कोट्यधीशेन रोथ्स्चैल्डेन प्रेषितम् । तत्र लिखितम् आसीत् यत् 'अभियोगम् अनुवर्तयतु । व्ययविषये मास्तु चिन्ता' इति । तेन सह दश-सहस्रफ्राङ्क्मूल्ययुतं चेक्पत्रम् अपि आसीत् ।

तत् प्राप्य सुहृदौ ततः नवोत्साहेन कार्यप्रवृत्तौ जातौ । आदौ च उच्च-न्यायालये व्यवहारं कर्तुं समर्थः कश्चनः अधिवक्ता नियुक्तः । तस्य निमित्तमेव अधिकं धनं दातव्यम् अभवत् । सः अधिवक्ता सिरियादेशस्थं बेरुत्नगरमेव गत्वा तत्र न्यायालये व्यवहारम् अनवर्तितवान् । बेन्यहूदेन अपि तत्र गन्तव्यम् अभवत् । अभियोगस्य आरम्भस्य अष्टमासानाम् अनन्तरं तत्र विचारणा प्रवृत्ता । इच्छायां सत्यामपि अवकाशस्य अभावात् हेम्डा निस्सिं बेहरः वा बेरुत्नगरं गन्तुं न शक्तौ । ताभ्यां जेरूसलेंनगरे एव स्थित्वा बेन्यहूदेन प्रेष्यमाणायाः वार्तायाः प्रतीक्षा कृता । दीर्घकालस्य अनन्तरं बेन्यहूदेन प्रेषिता तन्त्रीवार्ता प्राप्ता । तत्र तु एकः एव शब्दः आसीत् 'निर्दोषी' इति ।

ततः द्वित्राणां दिनानाम् अनन्तरं बेन्यहूदः प्रत्यागतः । उच्चन्यायालयेन तस्य निर्दोषित्वं घोषितम् आसीत् । परन्तु तेन 'डीर्'पत्रिकायाः तु वर्षं यावत् स्थगनादेशः सूचितः आसीत् । तत्र अष्ट मासाः एतावता एव अतीताः आसन् । चतुर्णां मासानाम् अनन्तरं वा पुनरपि पत्रिकायाः पुनरारम्भः कर्तुं शक्यते इति बेन्यहूदः नितरां सन्तुष्टः अभवत् ।

* * *

हीब्रूशब्दकोषनिर्माणकार्यं बेन्यहूदेन स्वीकृतं जीवनस्य अत्यन्तं महत्त्वपूर्णं कार्यम् आसीत् । एषु दिनेषु सः तस्य एव कार्यस्य निमित्तं स्वीयां समग्रामपि शक्तिं विनियुक्तवान् । सः प्रतिक्षणं शब्दानां जपं करोति । पुरातनसाहित्य-सम्बद्धानि शताधिकानि पुस्तकानि पुनः पुनः परिशीलयति । ततः शब्दान् संगृह्णाति । पुरातनः कः शब्दः आधुनिके प्रसङ्गे कुत्र प्रयोक्तुं शक्यः इति चिन्तयति । यदा तादृशः कोऽपि शब्दः न लब्धः तदा सः नूतनं शब्दमेव सृजति । एवम् उद्धृतं नूतनतया सृष्टं प्रतिशब्दं, तत्सम्बद्धं विवरणं च सः लघुनि कागदखण्डे लिखित्वा स्थापयति । दिनेषु गच्छत्सु तादृशैः कागदखण्डैः तस्य उत्पीठिका पूर्णा जाता । तत्पश्चात् कपाटिकासु वातायनेषु चापि ते दृष्टाः अभवन् । कदाचित् अनेके कागदखण्डाः भूमौ निपतिताः अपि भवन्ति स्म । तस्य प्रकोष्ठस्य स्वच्छतां कर्तुं ये गच्छन्ति ते तेन स्पष्टतया सूच्यन्ते स्म यत् तत्रत्यः लघुः अपि कोऽपि कागदखण्डः न क्षेपणीयः, स्यात् नाम सः अवकरिकायामपि पतितः भवेत् ।

हेम्डा जानाति स्म यत् कस्यचिदपि छिन्नस्य पिहितपत्रस्य पृष्ठभागे, कस्यचिदपि मुद्रितस्य आह्वानपत्रस्य पृष्ठभागे वा बेन्यहूदेन सूक्ष्मैः अक्षरैः लिखितः तादृशः कश्चन शब्दः तादृशी टिप्पणी वा भवितुम् अर्हति यस्य उपयोगं भाविनि काले सहस्राधिकाः यहूद्याः अत्यन्तं प्रेम्णा कुर्युः....! अथवा तादृशः कश्चन शब्दः भवेत् यस्य निमित्तं बेन्यहूदेन नगरान्तरेषु स्थितेषु ग्रन्थालयेषु उपविश्य अन्वेषणं कृतं स्यात् । अतः सा अत्यन्तं जागरूकतया तादृशम् एकैकमपि कागदखण्डं सुरक्षिततया स्थापयति स्म ।

हेम्डा कदापि तं प्रसङ्गं विस्मर्तुं न शक्नोति यदा बेन्यहूदस्य 'कश्चन शब्दः' विनष्टः आसीत् । तस्मिन् दिने तस्याः समीपम् आगत्य सः उक्तवान् – ''प्रिये ! मूल्याङ्कपरिमाणके लघुनि पीतवर्णे पत्रे लिखितः मम 'सः शब्दः' कुत्र गतः....?''

बेन्यहूदस्य मुखभावः आसीत् अत्यन्तं प्रियतमस्य क्रीडनकस्य अदर्शनेन विषण्णस्य बालस्य मुखम् इव ।

''नैव । मया तु नैव दृष्टः'' – इति सा अवदत् ।

''अस्तु, तादृशः पीतवर्णः कागदखण्डः भवत्या किं न दृष्टः एव ?

मया तन्निमित्तं तिसृभ्यः घण्टाभ्यः अन्वेषणं क्रियमाणम् अस्ति ।''

''नैव । मया न दृष्टः । किम् आसीत् तस्मिन् कागदखण्डे ....?''

''कश्चन शब्दः । नूतनः कश्चन हीब्रूशब्दः । अत्यन्तं विशिष्टः महत्त्वपूर्णः च शब्दः सः । न जाने यदि सः न प्राप्येत तर्हि तन्निमित्तं मया पुनः कति मासान् यावत् ग्रन्थानां मध्ये तपः करणीयम् इति । तदपि अत्रैव वा, विदेशस्थेषु ग्रन्थालयेषु वा । सहस्रवर्षेभ्यः नित्यव्यवहारात् लुप्तः शब्दः सः । अवश्यं पुनः व्यवहारपथम् आनेतव्यः सः ।''

अन्ततो गत्वा सः शब्दः लब्धः आसीत् बेन्यहूदेन धृतस्य प्रावारकस्य कस्मिंश्चित् कोषे एव !

तेषु दिनेषु बेन्यहूदपरिवारः शब्दैः सह एव सहजीवनं करोति स्म । आर्थिकपरिस्थितिः अत्यन्तं शोचनीया आसीत् इत्यतः तस्य अल्पाहारे काफीपेयेन सः नान्यत्किमपि भवति स्म ऋते एतेभ्यः शब्देभ्यः । मध्याह्न-भोजने सुपिष्टकेन सह न किमपि अन्यत् भवति स्म ऋते एतेभ्यः शब्देभ्यः । रात्रिभोजनेऽपि मुष्टिमितेन आहारेण सह नान्यत्किमपि भवति स्म ऋते शब्देभ्यः !

तेषु एव दिनेषु कश्चन प्राध्यापकः बेन्यहूदस्य गृहम् आगतवान् । सः तस्य कार्यैः नितरां प्रभावितः अभवत् । तं बहुधा प्रशंसितवान् । तादृशस्य इतिहासनिर्माणकार्यस्य निमित्तम् अभिनन्दितवान् च । प्रस्थानसमये सः बेन्यहूदं सूचितवान् – ''भवान् यत् यत् लिखति तत् सर्वमपि कृपया किञ्चित् बृहति पत्रे लिखतु । तानि च पत्राणि व्यवस्थितरूपेण सञ्चिकासु स्थापयतु । अहं जानामि यत् भवादृशस्य तु तादृशकार्यं क्लेशाय एव इति । तथापि तथाकरणेन भवतः एव अधिकः समयः सञ्चितः भवति... ।''

बेन्यहूदः तस्य सूचनां ससन्तोषम् अङ्गीकृतवान् । ततः तेन कोषकार्यस्य निमित्तमेव अल्पवेतनेन द्वौ सहायकौ अपि नियुक्तौ । तौ प्रतिदिनं तेन लिखितस्य सर्वस्यापि प्रतिलिपिं कृत्वा तानि पत्राणि अकारादिक्रमेण व्यवस्थितं स्थापयतः स्म । यद्यपि कश्चन धनव्ययः अभवत् तथापि एतेन बेन्यहूदः पूर्वापेक्षया द्विगुणितं कार्यं कर्तुं सक्तः अभवत् ।

# १९. वर्णनातीता हानिः

केषाञ्चित् दिनानाम् अनन्तरं बेरन्-रोथ्स्चैल्डस्य अपरः कश्चन प्रतिनिधिः बेन्यहूदस्य गृहम् आगतः। बेन्यहूदेन सह दीर्घकालं यावत् वर्तालापं कृत्वा ततः 'पाशा'वर्यस्य दर्शनार्थं गतः सः। सोऽयं वृद्धः पाशावर्यः यदि समाहितः भवति तर्हि किमपि कर्तुं शक्तः इति जानन् बेन्यहूदः गतस्य तस्य प्रतिनिधेः प्रत्यागमनमेव प्रतीक्षमाणः कालम् अयापयत्। अतीव विलम्बेन प्रत्यागतः सः वार्तां श्रावितवान् यत् यहूद्यानाम् अन्यदेशेभ्यः वासाय इस्त्रेल् प्रति आगमनं पाशावर्यः अनुमतवान् अस्ति इति। तदा एव बेन्यहूदेन स्मृतं यत् पूर्वं तादृशी अनुमतिः न आसीत् इत्यतः स्वमाता कियता कष्टेन आलुकगोण्या आनीता इति। इतःपरं तादृशं कष्टं न भविष्यति इति नितरां सन्तुष्टः सः।

"अन्यापि सन्तोषदायिनी वार्ता अस्ति..." - प्रतिनिधिः अवदत्।

"का सा ?" - औत्सुक्येन अपृच्छत् बेन्यहूदः।

"डीर्-पत्रिकायाः पुनःप्रकाशनस्य आरम्भविषयेऽपि तस्य कोऽपि आक्षेपः नास्ति इदानीम्। भवान् झटिति एव तस्य आरम्भं कर्तुमर्हति..।"

"एवम् ? अहो भगवतः कृपा...।" - बेन्यहूदः स्वसन्तोषं शब्दैः प्रकटयितुं शक्तः नाभवत्।

* * *

पत्रिकासम्पादनं प्रकाशनं च बेन्यहूदस्य प्रियतमं कार्यम् आसीत्। इदानीं तत् कार्यं कर्तुं पुनरपि अवसरः प्राप्तः। अतः सः द्विगुणितेन उत्साहेन तस्मिन् कार्ये मग्नः अभवत्। 'इदानीं पत्रिकायाः नूतनम् आकर्षकं च रूपं भवेत्। तत्र नूतनाः स्तम्भाः अपि भवेयुः' इति संकल्पं कृत्वा कार्यं कृतवान् सः। हेम्डायाः साहाय्यं तु तस्य आसीदेव। पूर्वं तया 'जेरूसलेंतः पत्राणि' इत्येषः स्तम्भः नियतरूपेण लिख्यमानः आसीत्। इदानीं तु 'वियेन्नातः पत्राणि', 'प्यारिस्तः पत्राणि' - इत्यादीन् स्तम्भान् लेखितुम्

आरब्धवती सा । तस्याः वासस्तु आसीत् जेरूसलेंनगरे एव । परन्तु पत्राणि लिखति वियेन्नातः प्यारिस्तः वा ! तदर्थं सा वियेन्नातः प्यारिस्तः च प्रकाश्यमानाः अनेकाः पत्रिकाः आनायितवती । तत्र प्रत्यक्षरं पठित्वा तत्तन्नगरस्य तत्र प्रवर्तमानानां घटनानां च पूर्णं परिचयं प्राप्य तत्रैव निवसन् कश्चन जनः इव पत्रं लिखति स्म सा । अन्येन नाम्ना लिख्यते इत्यतः बहवः वाचकाः भ्रान्ताः अपि अभवन् यत् वियेन्नातः प्यारिस्तः एव काचित् लेखिका एवं पत्राणि लिखति इति । परन्तु कथमपि केचन वाचकाः एतत् रहस्यं ज्ञातवन्तः अपि । तथापि अजानतां संख्या एव अधिका आसीत् । कथमपि भवतु नाम । तेषु वर्षेषु नियतरूपेण तादृश-स्तम्भलेखनेन हेम्डया हीब्रूभाषया नूतनविधम् अत्युत्कृष्टं च किञ्चित् साहित्यं सृष्टम् अभवत् । पाठकाः अपि अत्यन्तम् उत्साहेन डीर्पत्रिकायाः पुनरागमनं स्वागतीकृतवन्तः । पूर्वापेक्षया अधिकसंख्यया पत्रिकायाः ग्राहकाः अपि लब्धाः ।

* * *

दिनेषु गच्छत्सु बेन्यहूदस्य तस्य सहचराणां च प्रयत्नानां फलं तत्र तत्र दृष्टिगोचरीभवति स्म । इस्त्रेल्देशस्य केषुचित् नगरेषु विशिष्य जाफ्फानगरे हीब्रूभाषिणां संख्या वर्धमाना अभवत् । १८९७ तमक्रिस्ताब्दसमये तु प्रायः तत्रत्याः पञ्चाशत्प्रतिशतं जनाः हीब्रूभाषया नित्यव्यवहारं कुर्वन्ति स्म । अनेकेषु विद्यालयेषु अपि इदानीम् अधिकृतरूपेण हीब्रूभाषा पाठ्यते स्म । परन्तु बहुत्र हीब्रूभाषायाः पाठनं तु विदेशीयभाषायाः पाठनमिव अन्यभाषामाध्यमेन एव प्रचलति स्म । बेन्यहूदः 'मातृभाषारूपेण, प्रथम-भाषारूपेण वा हीब्रूभाषामाध्यमेन एव सा पाठनीया' इति अनुरोधं कृतवान् । तदर्थम् अभियानमेव सञ्चालितवान् । ये तथा पाठयित्वा सफलतां प्राप्तवन्तः तेषां विषये प्रेरणादायिनीः वार्ताः डीर्पत्रिकायां प्रकाशितवान् । ताः पठित्वा प्रभाविताः बहवः शिक्षकाः स्वयमपि तादृश-प्रयोगान् आरब्धवन्तः । क्रमशः हीब्रूमाध्यमेन हीब्रूपाठनं सहजं जातम् ।

* * *

तेषु एव दिनेषु कदाचित् मुद्रणालयात् आगत्य गृहं प्रविष्टः बेन्यहूदः द्वारात् एव पत्नीम् आहूतवान् - "प्रिये, प्रिये... !"

तस्य मुखे अपूर्वा कान्तिः विलसति स्म । "किम्... ?" इति पृच्छन्ती बहिः आगता हेम्डा तस्य मुखं दृष्ट्वा विस्मिता अभवत् । स्वीयहस्ते विद्यमानं सुन्दरेण कागदेन आवृतं कामपि पोटलिकां तस्यै यच्छन् सः उक्तवान् - "उद्घाट्य पश्यतु स्वयमेव एतत् किमिति... ।"

कुतूहलेन उद्घाट्य दृष्टवती हेम्डा । तत्र आसीत् बेन्यहूदस्य तावतां दिनानां परिश्रमस्य प्रतिफलस्वरूपः हीब्रूशब्दकोषस्य प्रथमः भागः । बहोः कालात् अनपत्यः कश्चन जगतः पुरतः स्वीयं प्रथमम् अपत्यं यावता आनन्देन उत्साहेन च उपस्थापयति तथा तत् पुस्तकं प्रदर्शयन् आसीत् अधुना बेन्यहूदः । यद्यपि अल्पमूल्यस्य कागदस्य उपरि अनाकर्षकरूपेण मुद्रितः आसीत् सः कोषः, तथापि हेम्डा तस्य महत्त्वं जानाति स्म । बेन्यहूदः एव उक्तवान् - "प्रिये ! द्विसहस्रवर्षाणाम् अनन्तरं प्रकाश्यमानः अस्ति एतादृशः कश्चन कोषः । आधुनिकजीवने नित्यव्यवहारे हीब्रूभाषाम् उपयोक्तुम् इच्छुकेन प्रत्येकं जनेन अपि अस्य साहाय्यं स्वीकर्तव्यं भवति । प्रथमभागस्य अस्य प्रकाशनेन मया एतावत् तु ज्ञातमस्ति यत् इतःपरं मया करणीयस्य कार्यस्य परिमाणं कियत् अधिकम् अस्ति इति । अहोरात्रं कार्यं करणीयं भवेत् मया । तथापि न जाने कथम् एतत् कार्यं समापयेयम् इति... ।"

"अहं कमपि उपायं सूचयामि किम् ?" - हेम्डा पृष्टवती ।

"कुतो न, अवश्यं सूचयतु... ।"

"भवान् अन्यत् सर्वमपि कार्यजातं परित्यजतु । कोषनिर्माणकार्यमेव करोतु । नान्यत्किमपि... ।"

"परन्तु पत्रिकाकार्यम् अस्ति एव खलु मम... ।"

"तं भारम् अहं वक्ष्यामि । भवान् तदा तदा पत्रिकायै कमपि लेखं लिखतु । भाषाविषयकं स्तम्भं तु नियतरूपेण लिखतु एव । अन्यत् सर्वमपि अहं निर्वक्ष्यामि...।"

पत्न्याः सामर्थ्यविषये एतावता पूर्णं ज्ञातम् आसीत् बेन्यहूदेन । अतः सः सन्तोषेण एव तं प्रस्तावम् अङ्गीकृतवान् । ततः आरभ्य हेम्डा एव अनधिकृतरूपेण डीर्पत्रिकायाः सम्पादिका अभवत् । तद्दिने रात्रौ सा अट्टात् स्वीयां पेटिकाम् अवतारितवती । तत्र आसन् तया महाविद्यालये पठितानि रसायनशास्त्रसम्बद्धानि पुस्तकानि । यद्यपि सः तस्याः प्रियः विषयः आसीत्, तथापि सा तानि पुस्तकानि निर्व्यामोहम् अग्निना दग्धवती । मनसि एव उक्तवती च – 'इतःपरं मम एकः एव विषयः – 'हीब्रूभाषा' इति ।

* * *

हेम्डायाः पुत्रः जातः । पितरमेव अनुहरन्तं तं हेम्डा 'एहूद'नाम्ना एव आहूतवती । परन्तु एहूदः वर्षमपि न अजीवत् । न्युमोनियारोगग्रस्तः सन् सः वर्षाभ्यन्तरे एव प्राणान् अत्यजत् । बेन्यहूदः एतावता मरणप्रसङ्गेन अत्यन्तं परिचितः आसीत् । परन्तु हेम्डायाः अयं नूतनः अनुभवः । बेन्यहूदः एव तां कथमपि समाश्वासितवान् । तस्याः दुःखं विस्मारयितुं तां विभिन्न-स्थानानि नीतवान्, यत्र हीब्रूप्रचारकार्यं सम्यक् प्रचलति स्म । तत्र बहुभिः जनैः मिलित्वा तैः सह भाषमाणा सा स्वीयं दुःखं क्रमशः विस्मृतवती ।

* * *

हेम्डायाः पिता योनसः एषु वर्षेषु अत्र एव निवसति स्म । पुत्रीं जामातरं च द्रष्टुं रशियादेशस्थात् ग्लुबोकियानगरात् अत्र आगतः सः जामातुः बेन्यहूदस्य कार्यैः प्रभावितः सन् तस्य साहाय्यं कर्तुम् एतावत्कालपर्यन्तम् अपि स्थितवान् आसीत् । अधुना सः चिन्तितवान् यत् 'अहं कतिचन वर्षाणि प्यारिस्नगरे स्थास्यामि' इति । अतः सः तदर्थं बेन्यहूदस्य हेम्डायाश्च अनुमतिं प्रार्थितवान् । यद्यपि तत्र तयोः पूर्णः अङ्गीकारः न आसीत् तथापि योनसः स्वस्य निर्धारविषये अचलः आसीत् । सः ततः प्रस्थितवान् एव । जाफ्फानगरं गत्वा ततः नौकया तेन अग्रे प्रयाणं करणीयम् आसीत् । परन्तु यदा सः जाफ्फानगरं प्राप्तवान् तावता एव सा नौका ततः गता आसीत् । अग्रिमा नौका तु पञ्चदशदिनानाम् अनन्तरमेव

आसीत् । अतः योनसः जाफ्फानगरे एव स्थितवान् । परन्तु तत्र सः केनचित् तीव्रेण रोगेण पीडितः अभवत् । जाफ्फानगरसमीपस्थे 'रिषन् ले झियोन्'नामके नगरे योनसस्य पुरातनसुहृदः बहवः आसन् । अतः योनसः चिकित्सार्थं तत्र गतवान् । तावता तस्य रोगः तथा प्रवृद्धः आसीत् यत् कृताः सर्वाः अपि चिकित्साः विफलाः अभवन् । तत्रैव सः स्वीयप्राणान् अत्यजत् ।

ग्लुबोकियानगरस्य सुप्रसिद्धः उद्यमपतिः सोऽयं योनसः अनाथं बालम् एलिसरं स्वीयपुत्रमिव पालितवान् आसीत् । तस्य मनसि हीब्रूभाषायाः विषये भावजागरणं सः एव कृतवान् आसीत् । एलिसरस्य जीवनस्य दिक्परिवर्तने सः एव कारणीभूतः आसीत् । किं बहुना, स्वस्य द्वे पुत्र्यौ तस्मै समर्पिते आस्तां तेन । न केवलं तावत्, अन्ते च स्वयमपि जामातुः समीपं गत्वा तत्रैव तिष्ठन् तस्य आन्दोलनकार्ये विनीतः कार्यकर्ता इव साहाय्यम् आचरितवान् आसीत् सः । अतः योनसस्य दिवङ्गमनात् हेम्डा-बेन्यहूदयोः जाता हानिः वर्णनातीता एव आसीत् ।

* * *

# २०. नैषः स्वप्नः, यदि भवान् इच्छति !

इस्त्रायिल् जांग्विलः तत्कालीनः सुप्रसिद्धः कश्चन ब्रिटिश्लेखकः । सः लण्डन्नगरे निवसति स्म । तेन लिखितं प्रत्येकं लेखं पुस्तकं वा अनेकेषु देशेषु लक्षाधिकाः जनाः अत्यन्तं श्रद्धया पठन्ति स्म । बेन्यहूदेन ज्ञातं यत् सोऽयं जांग्विलः केनचित् प्रतिनिधिमण्डलेन सह जेरूसलेंनगरम् आगमिष्यति इति । झटिति तस्य मनसि कश्चन विचारः स्फुरितः । 'यदि अयं महानुभावः हीब्रू-आन्दोलनेन प्रभावितः भवेत्, तर्हि.. ! अग्रे एतद्विषये लेखान् लिखेत् । एतं विषयम् अधिकृत्य पुस्तकमपि कदाचित् लिखेत्.. । अतः कथमपि सः जेतव्यः' इति ।

ततः बेन्यहूदः पत्रद्वारा जांग्विलं निवेदितवान् यत् 'जेरूसलें-वासावसरे समयं परिकल्प्य सकृत् मम गृहं प्रति आगत्य मया दीयमानम् अल्पम् आतिथ्यं स्वीकर्तव्यम्' इति । अहो आश्चर्यम् ! जांग्विलेन बेन्यहूदस्य तत् निमन्त्रणम् अङ्गीकृतम् । केषाञ्चित् दिनानाम् अनन्तरं सः जेरूसलेंनगरम् आगतः अपि । नगरस्य प्रमुखाः यहूद्यनायकाः तत्र वसन्तः अन्ये ब्रिटिश्-जनाश्च तस्य स्वागतकार्यक्रमम् आयोजितवन्तः आसन् । कार्यक्रमस्य अनन्तरं जांग्विलः साक्षात् बेन्यहूदस्य गृहम् आगतवान् । बेन्यहूद-परिवारः हार्देन भावेन तस्य महालेखकस्य स्वागतम् अकरोत् । चतुर्वर्षीया डेबोरा सुन्दरं पाटलपुष्पं तस्मै प्रायच्छत् । वात्सल्येन तस्याः चिबुकं स्पृशन् जांग्विलः आंग्लभाषया अपृच्छत् - "बाले ! तव नाम किम् ?"

डेबोरा किमपि प्रत्युत्तरं न उक्तवती । झटिति जांग्विलः स्वेन ज्ञातया यिड्डिष्भाषया तमेव प्रश्नम् अपृच्छत् । अधुनापि डेबोरा किमपि न उक्तवती । "महोदय ! सा नान्यां भाषां जानाति ऋते हीब्रूभाषायाः । तस्याः मातृभाषा एव हीब्रू" - दम्पती उक्तवन्तौ ।

"किमिदं सत्यम्.. ? किम् एवमपि भवितुम् अर्हति... !!" इति सविस्मयम् उद्गारम् अकरोत् जांग्विलः । तेन पूर्वं कदाचित् स्वल्पप्रमाणेन हीब्रूभाषा अपि पठिता आसीत् । परन्तु कदापि तया सम्भाषणं नैव कृतम् आसीत् । तथापि एकैकं शब्दमेव स्मरन् सः तया भाषया एव कानिचित् वाक्यानि अवदत् । इंग्लिष्-उच्चारणशैल्या उच्चारितानि हीब्रूवाक्यानि तानि । तथापि कांश्चित् शब्दान् अवगत्य प्रत्युत्तरं दत्तवती डेबोरा । जांग्विलः नितरां सन्तुष्टः अभवत् ।

ततः आरभ्य जांग्विलः नैकवारं तत् गृहम् आगतवान् । बेन्यहूदेन सह तस्य गाढा मित्रता जाता । द्वयोः मध्ये तदा तदा विस्तरेण विचारविनिमयः प्राचलत् । कदाचित् बेन्यहूदः तं निवेदितवान् यत् 'जेरूसलेंनगरनिवासिनः उद्दिश्य भवता उद्बोधनं करणीयम्' इति । जांग्विलः अङ्गीकृतवान् । बेन्यहूदेन त्वरया कार्यक्रमः आयोजितः । नगरस्य सुप्रसिद्धे 'न्यूग्रांड्'-वसतिगृहे प्रवृत्ते तस्मिन् कार्यक्रमे न केवलं यहूद्यनायकाः अपि तु अनेके मुस्लिंनेतारः, क्रैस्तसमाजस्य गण्याश्च उपस्थिताः आसन् । 'पवित्रभूमौ यहूद्याः' इति विषयम् अधिकृत्य जांग्विलः तद्दिने विस्तरेण उद्बोधनम् अकरोत् । विविधेषु देशेषु तत्रत्यैः देशवासिभिः यहूद्याः कथं वञ्चिताः, तथापि ते कथं स्वसंस्कृतिं रक्षितवन्तः इति च सः अवर्णयत् । तस्य तत् ऐतिहासिकं भाषणं सर्वेषु महान्तं प्रभावम् अजनयत् ।

केषाञ्चित् दिनानाम् अनन्तरं यदा जांग्विलः जेरूसलेंतः प्रस्थितः तदा तस्य नेत्रयोः कोणे अश्रुबिन्दुः दृष्टः । तम् आपृच्छ्य प्रत्यागतः बेन्यहूदः पत्नीम् उक्तवान् – "मन्ये अयं महानुभावः जितः अस्माभिः" इति ।

"अहमपि तथैव चिन्तयामि" इति उक्तवती हेम्डा । डीर्पत्रिकायाः अग्रिमे अङ्के प्रधानः विषयः आसीत् जांग्विलस्य जेरूसलेंप्रवासः । तस्य भाषणस्य सारांशः अपि तत्र प्रकाशितः आसीत् । निस्संशयं बहवः जनाः तस्य पठनेन अपि प्रभाविताः अभवन् ।

थियोडर्हर्लः अपरः कश्चन हङ्गेरियन्लेखकः नाटककारश्च यश्च एतदान्दोलनविषये आसक्तः आसीत् । परन्तु बेन्यहूदस्य बहवः विचाराः

प्रकाशनस्य सप्तदशवर्षाणाम् अनन्तरं १८९६तमे वर्षे सः 'यहूद्यराज्यं' नाम पुस्तकं प्रकाशितवान् । पूर्वं यद्यपि स एव लेखकः 'प्रपञ्चस्य अन्यदेशेषु निवसद्भिः यहूद्यैः स्वमातृभूमिं प्रतिगत्य तत्र निवासः करणीयः' इत्येतं बेन्यहूदस्य विचारम् अप्रायोगिकं मत्वा उपहसितवान् आसीत् । तथापि इदानीं सः बेन्यहूदस्य विचारम् अङ्गीकुर्वन् सर्वैः यहूद्यैः तदेव करणीयम् इति अनुरोधं कृतवान् । यहूद्यानामेव पृथग्राज्यनिर्माणविषये विदेशेषु निवसद्भ्यः अपि यहूद्येभ्यः प्रेरणादानाय तेन प्रदत्तम् एकं ध्येयवाक्यं कालान्तरे विश्वप्रसिद्धम् अभवत् । तत् आसीत् 'नैषः स्वप्नः, यदि भवान् इच्छति !' इति । (If you will it, it is no dream !) तदेव ध्येयवाक्यं वदन्तः असंख्याः यहूद्याः स्वराज्यनिर्माणस्य स्वप्नं पश्यन्तः कार्यक्षेत्रम् अवातरन् । अन्ते च तत्र यशस्विनः अपि अभवन् ।

थियोडर्हर्लः तत्समानचिन्तकाः अन्ये केचन मिलित्वा १८९७तमे क्रिस्ताब्दे स्विट्सर्लेण्ड्देशे बासेल्नगरे विश्वयहूद्यसम्मेलनं करणीयम् इति निश्चितवन्तः । तत्र अवश्यं गन्तव्यं, सर्वेषु विचारक्षेत्रेषु भागः ग्रहीतव्यः इति बेन्यहूदस्य महती इच्छा आसीत् । परन्तु कारणद्वयेन तत्र अगमनमेव तेन अङ्गीकृतम् । तत्र एकं तु तस्य दुर्बला आर्थिकस्थितिः, अपरं च इदमिदानीं कारागृहात् बहिरागतः सः देशात् बहिः गमनाय नानुमतः आसीत् टर्क्शासनेन । अतः दूरादेव सम्मेलनस्य यशस्वितां देवं प्रार्थितवान् सः ।

विश्वयहूद्यसम्मेलनम् अत्यन्तं यशस्वितया निर्वर्तितम् अभवत् । यहूद्यसमुदायस्य महानेतारः सम्मेलनमञ्चात् सर्वेभ्यः यहूद्यबन्धुभ्यः आह्वानं दत्तवन्तः यत् 'सर्वेषामपि यहूद्यानाम् अस्माकम् एकमेव गम्यं स्थानम् अस्ति इस्रेल् । यहूद्यधर्मः पुनरपि परिपूर्णरूपेण तस्यामेव मातृभूमौ विकसेत्' इति । तस्मिन् एव अवसरे विश्वयहूद्यसङ्घः अपि संस्थापितः अभवत् । विश्वस्य कस्मिंश्चिदपि अपि कोणे निवसता यहूद्येनापि अत्यल्पसदस्यता-शुल्कदानेन तस्य सङ्घस्य सदस्यत्वं प्राप्तुं शक्यम् आसीत् । थियोडर्हर्लः एव सङ्घस्य अध्यक्षत्वेन चितः अभवत् । लण्डन्नगरस्थे कस्मिंश्चित्

एव सङ्घस्य अध्यक्षत्वेन चितः अभवत् । लण्डन्नगरस्थे कस्मिंश्चित् वित्तकोषे यहूद्यराष्ट्रियनिधेः आरम्भः करणीयः इत्यपि निर्णयः जातः । अनुदितस्य अपि यहूद्यराष्ट्रस्य कृते हीब्रूभाषया लिखितं किञ्चित् राष्ट्रगीतम् अङ्गीकृतम् अभवत् । राष्ट्रध्वजस्य अपि स्वरूपविषये निर्धारः कृतः ।

जेरूसलेंनगरे एव स्थित्वा विश्वसम्मेलनस्य सर्वाः वार्ताः ज्ञात्वा बेन्यहूदः नितरां सन्तुष्टः अभवत् । तस्य सन्तोषस्य अन्यदपि कारणम् आसीत् यत् 'कार्यकारिसमितेः सदस्यरूपेण डीर्-पत्रिकायाः सम्पादकः निर्विरोधं चितः अस्ति' इति हर्ल्वर्यः एव पत्रद्वारा तं सूचितवान् आसीत् । परन्तु बेन्यहूदः एतदर्थं तु सर्वथा विस्मितः निराशश्च अभवत् यत् सम्मेलने भाविनः यहूद्यराष्ट्रस्य राष्ट्रगीतम्, राष्ट्रध्वजः इत्यादयः अनेके विषयाः चिन्तिताः निर्णीताश्च, परन्तु तत्र राष्ट्रभाषाविषये कोऽपि उल्लेखः एव नैव कृतः आसीत् । यथापूर्वं बेन्यहूदः पत्न्याः पुरतः स्वीयम् असन्तोषं प्राकटयत् । सापि यथापूर्वं तस्य सान्त्वनम् अकरोत् ।

तेषु एव दिनेषु बेन्यहूदः विश्वस्य नानाभागेषु निवसद्भ्यः यहूद्येभ्यः आह्वानं यच्छन् द्वितीयम् एतिहासिकं लेखं लिखितवान् । पूर्वतनं निवेदनं यदा कृतम् आसीत् तदा सः विशेषतया सम्प्रदायशीलान् यहूद्यान् एव मनसि निधाय तादृशाः सर्वे इस्रेल्देशं प्रत्यागच्छन्तु इति लिखितवान् आसीत् । इदानीं तु तस्य दृष्टिः इतोऽपि विशालतरा आसीत् । अतः सः लिखितवान् - 'विदेशेषु निवसन्तः सर्वेऽपि यहूद्यपरिवाराः स्वमातृभूमिं प्रत्यागच्छन्तु । विदेशेषु निवसन्तः अपि यहूद्याः यहूद्याः एव । तैः परिणीताः महिलाः यद्यपि तत्तद्देशीयाः तत्तन्मतावलम्बिन्यः स्युः, तथापि ताः अपि यहूद्याः एव । न केवलं तावत्, तासु उत्पन्नाः शिशवः, किं बहुना, अग्रिमपरम्परा एव यहूद्यपरम्परा इति अस्माकं निर्णयः । अतः तादृशाः अपि सर्वे स्वमातृभूमिम् इस्रेल्देशं प्रत्यागच्छेयुः' इति ।

* * *

# २१. पुनः प्राप्तः नवीत्साहः !

बासेल्सम्मेलनस्य तादृशाः अपि केचन परिणामाः अभवन् ये बेन्यहूदस्य वैयक्तिकजीवनेऽपि परिवर्तनम् आनयन् । इंग्लेण्ड्देशे कार्यरता काचित् यहूद्यक्षेमाभिवृद्धिसंस्था तस्य सम्मेलनस्य अनन्तरं बेन्यहूदेन क्रियमाणम् आन्दोलनकार्यं ज्ञात्वा तस्य कार्ये साहाय्यं कर्तुम् इच्छन्ती पञ्चसहस्रफ्रांक्स्मितं धनराशिम् अप्रेषयत् । 'एतच्च धनं स्वाभिलषितरीत्या व्ययीकर्तुं भवान् साधिकारः अस्ति' इत्यपि तया संस्थया सूचितम् आसीत् ।

तस्य धनस्य पूर्णतः सद्विनियोगः कर्तव्यः इति बेन्यहूदः निश्चितवान् । एषु दिनेषु तस्य ऋणं प्रवृद्धम् आसीत् । कुत्रचित् ऋणार्णम् अपि तेन कृतम् आसीत् । अधमर्णत्वं सर्वदा तस्मिन् सङ्कोचं जनयति स्म । अतः सः अधिकस्य धनस्य विनियोगम् ऋणप्रत्यर्पणे एव अकरोत् । ततः स्वस्य मुद्रणालयं नवीकर्तुं तत्र नूतनानि लोहाक्षराणि क्रेतुं च किञ्चित् धनम् उपयुक्तवान् । तेन आगामिदिनेषु पत्रिका इतोऽपि आकर्षकरूपेण प्रकाशयितुं शक्यते इति तस्य योजना आसीत् । अन्ते च शिष्टेन धनेन बेन्यहूदः एकं सुन्दरं गृहं क्रीतवान् । तच्च गृहं पत्न्यै समर्पयन् सः उवाच - ''प्रिये ! अद्यपर्यन्तम् अतीवसामान्ये गृहे दिनानि यापितानि भवत्या । परन्तु एतदस्ति अस्माकं स्वप्नसौधम् । इतःपरं वा वयमपि अन्ये मनुष्याः इव जीवामः । अस्मिन् गृहे न केवलम् उद्यानम्, अपि तु 'स्नानगृहम्' अपि अस्ति ।''

(तेषु दिनेषु तस्मिन् देशे गृहेषु पृथग्रूपेण स्नानगृहाणि एव न भवन्ति स्म । महावसतिगृहमात्रे स्नानगृहाणि भवन्ति स्म ।)

'बेन्यहूदस्य गृहे स्नानगृहम् अस्ति' इत्येषः महान् विशेषः एव आसीत् । अतः नगरस्य प्रेक्षणीयानि स्थानानि द्रष्टुम् आगताः पर्यटकाः कदाचित् बेन्यहूदस्य स्नानगृहं द्रष्टुमपि आगच्छन्ति स्म ! 'जेरूसलेंनगरस्य परिवारगतं

सर्वप्रथमं स्नानगृहम् एतत्' इति अभिमानेन वदति स्म हेम्डा तद्विषये ।

* * *

केचन मासाः सुखेन नीताः तैः । पुनः कदाचित् हेम्डा अस्वस्था जाता । वैद्यस्य परामर्शानन्तरं ज्ञातं यत् सा मलेरियारोगेण पीडिता अस्ति इति । दिनेषु गच्छत्सु कृशताम् आप्नुवतीं तां परिशील्य वैद्यः बेन्यहूदम् अवदत् – "यदि एषा कांश्चन मासान् यावत् युरोपदेशेषु यापयिष्यति तर्हि एव अस्याः स्वस्थताप्राप्तेः सम्भावना अस्ति" इति । बेन्यहूदः पूर्वनिश्चितान् कार्यक्रमान् सर्वान् अपि व्याक्षिप्य झटिति प्यारिस्गमनाय आरक्षणं कारितवान् । अनन्तरसप्ताहे एव सः तया सह प्यारिस्नगरं गतवान् च ।

प्यारिस्नगरे ताभ्यां मासद्वयं यापितम् । तत्र बेन्यहूदः ग्रन्थालयेषु अध्ययनं कृतवान् । ख्यातनाम्नां बहूनां चिन्तकानां मेलनं कृत्वा तैः सह हीब्रू-आन्दोलनविषये विचारविमर्शं च अकरोत् । बेरन् रोथस्चैल्डः अपि कदाचित् तेन दृष्टः, यः पूर्वम् आन्दोलनस्य निमित्तं महत् अर्थसाहाय्यं कृतवान् आसीत् । यदा तस्य मेलनं जातं तदा तस्मै कृतज्ञताः समर्पयन् बेन्यहूदः उक्तवान् – "नितराम् उपकृतः अस्मि अहं तत्रभवता ।"

परन्तु बेरन् रोथस्चैल्डः अवदत् – "एवम् ..? कदापि न दृष्टपूर्वः भवान् । कथमहं भवन्तम् उपकृतवान् स्याम् ..?" इति ।

"श्रीमन् ! भवता महान् धनराशिः प्रदत्तः अस्ति मदीयकार्याय" इति वदन् स्मारितवान् बेन्यहूदः । तथापि रोथस्चैल्डः स्वेन कृतम् उपकारं महान्तं न अमन्यत ।

"अस्तु, भवदीयं कार्यम् अनुवर्तयतु । परन्तु पुनः समस्यायां मा पततु" इति उक्त्वा सः बेन्यहूदम् आपृष्टवान् । महाधनिकस्य तस्य ईदृशेन स्वभावेन नितरां प्रभावितः अभवत् बेन्यहूदः ।

प्यारिस्नगरस्य अनन्तरं ताभ्यां लण्डन्नगरं प्रति गतम् । तत्र ताभ्यां विशेषतया इस्रायिल्-जांग्विलः मिलितः । सः पूर्वं जेरूसलेम् आगत्य तत्र बेन्यहूदपरिवारस्य आतिथ्यम् अपि स्वीकृतवान् आसीत् । जांग्विलस्य मेलनं फलदायकम् अभवत् । सः बेन्यहूदस्य कार्ये साहाय्यं कर्तुम्

अङ्गीकृतवान् । लण्डन्नगरेऽपि बेन्यहूदः ग्रन्थालयादिषु स्वीयम् अध्ययनम् अनुवर्तितवान् । विशेषतः ब्रिटिष्म्यूसियम् - इत्यत्र तेन महत् अध्ययनं कृतम् । तस्मिन् अपि नगरे ताभ्यां मासद्वयं यावत् स्थितम् । तावता बेन्यहूदः बहूनां विदुषां चिन्तकानां च परिचयम् आत्मीयतां च प्राप्तवान् आसीत् ।

लण्डन्तः तौ पुनरपि प्यारिस्नगरमेव आगतवन्तौ । तत्र मासं यावत् ताभ्यां स्थितम् । एतावता हेम्डायाः स्वास्थ्ये महती प्रगतिः जाता आसीत् । जगतः अत्यन्तं मोहकं नगरं तत् प्यारिस् क्रमशः ताम् अपि तथा आकृष्टाम् अकरोत् यत् सा ततः प्रस्थातुमपि न ऐच्छत् । अन्ततोगत्वा कर्तव्यं स्मरन्ती सा पत्या सह प्रस्थिता । पञ्चमासानाम् अनन्तरं तौ यदा जेरूसलेंनगरं प्रत्यागतौ तावता हेम्डा यथापूर्वं स्वस्था आसीत् । तस्य प्रवासस्य कारणतः तयोः दम्पत्योः कार्योत्साहः निश्चयेन प्रवृद्धः आसीत् ।

तेषु एव दिनेषु हेम्डा बेन्यहूदस्य सूचनानुसारं स्वीये सम्पादिकात्वे नूतन-पत्रिकायाः आरम्भं कर्तुं शासनस्य अनुमतिं प्राप्तुम् आवेदनं कृतवती । शासकीयाः अधिकारिणः आवेदनपत्रं दृष्ट्वा एव विस्मिताः अभवन् । उक्तवन्तश्च - ''महिलायाः सम्पादिकात्वे पत्रिकाप्रकाशनम् ...! एतत्तु अश्रुतपूर्वमेव'' इति ।

''न तथा । अधुनापि कान्स्टांटिनोपल्तः प्रकाश्यमानां काञ्चित् पत्रिकां सम्पादयति काचित् महिला एव'' इति हेम्डा यदा प्रमाणं दर्शितवती तदा तैः पुनः पृष्टं - ''अस्तु । भवत्याः किं वयः ?'' इति ।

''षड्विंशतिः वर्षाणि...'' - हेम्डा उक्तवती ।

''तर्हि एतत्तु सर्वथा असम्भवम् । कस्मैचिदपि ऊनत्रिंशद्वर्षीयाय पत्रिका-प्रकाशनाय अनुमतिः सर्वथा न दीयते'' इति ते अवदन् । परन्तु हेम्डायाः महान्तम् अनुरोधं दृष्ट्वा तेषु अन्यतमः अवदत् - ''यदि भवत्याः वयः त्रिंशत् वर्षाणि इति प्रमाणं दर्श्येत तर्हि किमपि कर्तुं शक्येत ...'' इति ।

कश्चन मार्गः ज्ञातः इति चिन्तयन्ती हेम्डा ततः प्रस्थिता । ततः विभिन्नमूलेभ्यः प्रयत्नं कृत्वा कथमपि तादृशं वयःप्रमाणपत्रं प्राप्तवती यत्र

अधुना सा त्रिंशद्वर्षीया इति दर्शितम् आसीत् । एतदर्थं तया भूरि उत्कोचः अपि दातव्यः अभवत् । तत्पश्चादेव तस्याः आवेदनपत्रं परिशीलनाय स्वीकृतम् अभवत् ।

* * *

परन्तु एतेषु एव दिनेषु बेन्यहूदस्य अस्वास्थ्यं विकोपतां गतम् । तस्याम् एव अवस्थायां सः कानूस्टाण्टिनोपाल्नगरं गतवान् । तत्र तस्य अनारोग्यम् इतोऽपि प्रवृद्धम् । कासावसरे रक्तं वमति स्म सः । चिकित्सार्थं दीर्घकालं यावत् तेन तत्रैव स्थातव्यम् अभवत् । किन्तु तदापि सः वरिष्ठैः तुर्कीयैः अधिकारिभिः सह वार्तालापादिकं कुर्वन् इस्त्रेल्देशाय स्वातन्त्र्यदानविषये तेषाम् अङ्गीकारं प्राप्तुं नानाविधान् प्रयत्नान् अकरोत् । परन्तु तत्रापि सः साफल्यं न प्राप्नोत् ।

बेन्यहूदस्य अनुपस्थितौ एव हेम्डा स्वीयं चतुर्थम् अपत्यं प्रसूतवती । तस्याः पुत्र्याः 'अदा' इति नाम कृतम् ।

बेन्यहूदः महता प्रयत्नेन थियोडर्हर्लेण मिलितः । ताभ्यां सुदीर्घकाल-पर्यन्तं विचारविनिमयः कृतः । हर्लः अपि इस्त्रेल्देशस्य स्वतन्त्रताविषये तथैव आसक्तः यत्नशीलश्च आसीत् यथा बेन्यहूदः । परन्तु हीब्रूभाषायाः राष्ट्रभाषाकरणे तस्य पूर्णतः सहमतिः न आसीत् । 'सर्वेऽपि यहूद्याः इस्त्रेल्देशं गच्छन्तु । तत्र निवसन्तु च । त्रिंशतः चत्वारिंशतः वा वर्षाणाम् अनन्तरम् अग्रिमसन्ततौ जाताः तदा निर्णयं कुर्वन्तु तत्र व्यवहारभाषा राष्ट्रभाषा वा का भवेत् इति । तद्विषये इदानीमेव अनुरोधकरणं नोचितम्' इति तस्य वादः ।

परन्तु बेन्यहूदस्य तु हीब्रूभाषाविषये एव महान् अनुरोधः । तस्याः भाषायाः व्यवहारपथं प्रति पुनरानयनेन एव सकलार्थसिद्धिः इति तस्य अचलः विश्वासः । सुदीर्घविचारविनिमयानन्तरमपि तयोः नैकतरः अपि अन्यस्य वादम् अङ्गीकृतवान् । निराशतया एव बेन्यहूदः जेरूसलेंनगरं प्रत्यागतः ।

* * *

# २२. शब्दसृक्

निराशतया प्रत्यागतं पतिं स्वागतीकुर्वती हेम्डा तस्मै सन्तोषवार्तां श्रावितवती – ''प्रिय ! अधुना तु भवता अभिनन्दनीया अस्मि अहम् ..।''

''तत् किमर्थम् ?'' – सः अपृच्छत् ।

''भवतः अपरः कश्चन स्वप्नः शीघ्रमेव साकारतां प्राप्स्यति । तुर्कीयेण सर्वकारेण पत्रिकासम्पादनाय अहम् अनुमता अस्मि ..!''

''एवम् ..? एतत्तु विश्वसितुमपि न शक्यम् । कथमपि भवतु । स्वीकरोतु अभिनन्दनानि सम्पादिकामहाभागे ..!'' – हार्दम् अभिनन्दितवान् सः । ततः उक्तवान् च – ''तर्हि अस्माभिः शीघ्रमेव पत्रिकायाः आरम्भः करणीयः । एषा तु पत्रिका डीर्-पत्रिकापेक्षया आकर्षिका भवेत् । प्रत्येकम् अपि यहूद्यमहिला एतां पत्रिकां क्रीत्वा पठेत्'' इति ।

इत्थं हेम्डायाः सम्पादिकात्वे 'हश्काफा'नाम्नी सा पत्रिका आरब्धा । अस्यां पत्रिकायां न केवलं हीब्रूभाषा, अपि तु फ्रेञ्च्-जर्मन्-अराबिक्भाषाणां स्तम्भाः अपि आसन् । यस्मिन् दिने पत्रिका विपण्यां दृष्टा तस्मिन् दिने नगरे सर्वत्र सा एव वार्ता आसीत् । जनाः उत्साहेन पत्रिकां क्रीत्वा पठितवन्तः । पठनसमनन्तरमेव तत्रत्यान् विषयान् अधिकृत्य स्वीयान् प्रतिस्पन्दान् प्रकाशितवन्तश्च ।

* * *

बेन्यहूदः कदाचित् पुत्रं बेन्झियोनम् अवदत् – ''वत्स ! अहं चिन्तयामि यत् यदि भवान् कश्चित् कालं प्यारिस्नगरे स्थित्वा पठिष्यति तर्हि वरं भवेत् ..।''

''नैव तात ! मम विचारः अस्ति यत् वरं जेरूसलेंनगरे चर्मकाररूपेण लोहकाररूपेण वा जीवनयापनम् । न पुनः विदेशं गत्वा तत्र अध्ययनम् ! अहं तु तद्विषये सर्वथा निरासक्तः अस्मि ।''

परन्तु बेन्यहूदः तेन अङ्गीकारयितुं प्रयत्नं कृतवान् – ''वत्स ! भवान्

अस्ति जगतः सर्वप्रथमः हीब्रूमातृभाषिकः शिशुः । भवन्तं तथैव संवर्धयता मया कश्चन प्रयोगः आरब्धः अस्ति । सः मया अन्तपर्यन्तं नेतव्यः अस्ति । तदर्थं भवतः सहकारः आवश्यकः । भवान् प्यारिस्नगरं गत्वा तत्र अध्ययनं समाप्य आगच्छतु । अग्रे हीब्रू-आन्दोलने भवता महती भूमिका निर्वोढव्या भविष्यति । प्यारिस्नगरवासेन भवतः दृष्टिः विशाला भविष्यति, येन कालान्तरे मातृभूमिसेवायां महत् योगदानं कर्तुं शक्ष्यति भवान्'' इति ।

अन्ते च बेन्झियोनः पितुः वचनम् अङ्गीकृतवान् । बेन्यहूदः तं प्यारिस्नगरं प्रति प्रेषितवान् ।

बेन्झियोनस्य अनुपस्थितौ बेन्यहूदः पुत्र्यां डेबोरायां नितरां स्निह्यति स्म । लब्धे समये तया सह क्रीडति स्म च । 'अदा' यदा द्विवर्षीया आसीत् तदा हेम्डा अपरां पुत्रीं प्रसूतवती । डेबोरायाः पुत्र्याः स्मरणार्थम् एतस्याः अपि 'श्लोमिट्' इत्येव नाम कृतं बेन्यहूदेन । ततः षण्मासानन्तरं बेन्यहूदस्य गृहे न्युमोनियाज्वरः दृष्टः । तेन आक्रान्ता सप्तवर्षीया डेबोरा कथमपि ततः मोक्षं प्राप्तुं नैव अशक्नोत् । पित्रोः नियमपूर्वकशुश्रूषां प्राप्यापि सा कस्याश्चित् रात्रौ स्वीयान् प्राणान् अत्यजत् । स्वीयस्य उद्यानस्य कोणे तस्याः शरीरं निखाय प्रत्यागतौ दम्पती सुदीर्घकालं यावत् किङ्कर्तव्यतामूढत्वम् अनुभूतवन्तौ ।

* * *

१९०१तमे क्रिस्ताब्दे बेन्यहूदः कदाचित् दिनदर्शिनीं पश्यन् पत्नीम् अवदत् - ''प्रिये ! जानाति किम् ? जेरूसलेंनगरम् आगतवतः मम विंशतिः वर्षाणि अतीतानि !''

एतेषु विंशत्यां वर्षेषु तेन महत् एव साधितम् आसीत् । अल्पायुः इति, रुग्णः इति च वैद्यैः घोषितः सः दशानाम् अपत्यानां पितृत्वं प्राप्तवान् आसीत् । यद्यपि तेषु पञ्च अपत्यानि दिवङ्गतानि, पुनः पञ्च जीवितानि सन्ति । तानि च शतं प्रतिशतं हीब्रूमातृभाषीणि । तैः हीब्रूमातृभाषिपरम्परा तेन आरब्धा आसीत् । अधुना तु तादृशाः सहस्राधिकाः अन्येऽपि बालाः जाताः आसन् । हीब्रूभाषिणां संख्या अपि प्रवृद्धा आसीत् । हीब्रूपत्रिका अपि तेन आरब्धा, अधुना यावत् जीवन्ती रक्षिता च आसीत् ।

भवेयुः । यावत् श्वसिमि तावता तत् समापनीयम् ..' एवं चिन्तितवान् सः ।
तदारभ्य तस्य दिनचर्या इतोऽपि कठिनतरा जाता । सः दिनस्य अत्यधिकं कालम् अध्ययनप्रकोष्ठे एव अनयत् । नूतनशब्दानां निर्माणाय अन्यभाषाणाम् अपि साहाय्यं स्वीकरणीयम् इति तेन ज्ञातमेव आसीत् । अतः सः आंग्ल-फ्रेञ्च्-जर्मन्-रूस्-हीब्रू भाषाभिः सह अराबिक्-कोप्टिक्-अस्सीरियन्-इथियोपियन्-भाषाणाम् अपि अभ्यासं कृतवान् । ताभ्यः भाषाभ्यः व्यावहारिकशब्दान् चित्वा तेषां हीब्रूप्रत्ययलगनेन तान् हीब्रूशब्दान् कृत्वा शब्दकोषे योजितवान् । अत्याधुनिकेऽपि काले हीब्रूभाषा कदापि शब्दाभावं नानुभवेत् इत्येव आसीत् तस्य अपेक्षा । तदर्थं सः वास्तविकः 'शब्दसृक्' एव अभवत् । सहस्राधिकाः नूतनाः हीब्रूशब्दाः तेन सृष्टाः । यथा यथा नूतनाः शब्दाः सृज्यन्ते तथा तथा सः तान् पत्रिकायां प्रकाशयति स्म । अन्यच्च, बालान् प्रेरयति स्म यत् ते विपण्यां मार्गेषु च जनैः सह वार्तालापसमये तान् नूतनान् शब्दान् प्रयुञ्जीरन् इति । तेन झटिति एव तद्विषये जनानां प्रतिस्पन्दः ज्ञायते स्म । सृष्टस्य नूतनस्य शब्दस्य प्रचारः एवं भवति स्म । तथापि बेन्यहूदः कदापि एवं न चिन्तयति स्म यत् त्वरया चिन्तनम् अकृत्वा यः कश्चन शब्दः स्रष्टव्यः इति । सुविचिन्त्य एव शब्दं सृजति सः । कदाचित् एवमपि प्रवृत्तम् -

बेन्यहूदस्य केनचित् मित्रेण महाधनिकः कश्चन यहूदः उद्यमपतिः मिलितः । बेन्यहूदेन आरब्धं कोषनिर्माणकार्यं विवृत्य तदर्थम् अर्थसाहाय्यं करोतु इति तेन मित्रेण धनिकः निवेदितः । स च धनिकः कोषकार्ये विशेषासक्तिं दर्शयन् अवदत् - "तर्हि भवतः मित्रं सूचयतु यत् मम 'क्रीडा' इत्यस्य उचितः हीब्रूशब्दः झटिति आवश्यकः । सः यदि तं शब्दं सूचयति तर्हि अहं निश्चयेन तस्मै कश्चित् धनराशिं ददामि" इति । सः सुहृत् बेन्यहूदम् एतत् न्यवेदयत् । परन्तु बेन्यहूदः इतोऽपि तन्निमित्तम् उचितं हीब्रूशब्दं न प्राप्तवान् आसीत् । इदानीं प्रयत्नं कृत्वापि झटिति तेन तदर्थम् अपेक्षितः शब्दः न प्राप्तः । त्वरया कमपि शब्दं सृष्ट्वा निवेद्य ततः धनराशिं प्राप्तुं सः अशक्ष्यत् एव । परन्तु तत्र तस्य तात्पर्यमेव नासीत् । 'मया सृज्यमानः शब्दः

तथा उत्तमः भवेत् यत् भविष्यति काले न कोऽपि तद्विषये आक्षेपं कुर्यात्' इति तस्य दृढेच्छा आसीत् । अतः सः धनलोभेनापि वशीकृतः नाभूत् । एतेन यद्यपि तस्मात् धनप्राप्तितः वञ्चितः अभवत् तथापि सः खेदं नानुभूतवान् । अग्रे कदाचित् क्रीडार्थकं नूतनम् उचितं च 'मिलाब'शब्दं निर्माय सः तं शब्दकोषे योजितवान् । प्रकरणम् एतत् स्मरन् सः वदति स्म यत् 'अयमेव मम कोषे अतीव 'मूल्य'वान् शब्दः' इति ।

कालान्तरे बेन्यहूदेन जेरूसलेंनगरे स्थितानां केषाञ्चित् विदुषां काचित् समितिः आरचिता । सृष्टानां शब्दानां परिशीलनं कृत्वा सा च हीब्रूभाषासमितिः निर्णयति स्म यत् किं ते शब्दाः योग्याः, उत अयोग्याः इति । प्रतिसप्ताहं मिलन्ती सा समितिः तस्मिन् सप्ताहे सृष्टान् शब्दान् परिशीलयति । तया समित्या अङ्गीकृताः शब्दाः एव व्यवहारपथम् आनीयन्ते स्म । परन्तु कदाचित् तस्याः समितेः विषयेऽपि आक्षेपाः श्रुताः । 'कुतः समितौ जेरूसलेंनगरस्थाः विद्वांसः एव भवेयुः ? किं ते एव बृहस्पतयः ...? देशस्य अन्यभागेषु निवसतां विदुषां प्रातिनिध्यं किमर्थं तत्र न भवेत् ...?' इति । बेन्यहूदः सर्वान् अपि तर्पयितुं प्रयत्नं तु कृतवान् ।

* * *

दिनेषु गच्छत्सु बेन्यहूदस्य गृहे तस्य अध्ययनप्रकोष्ठः सृष्टैः नूतनैः शब्दैः पूर्णः अभवत् । प्रतिशब्दं पृथक्पत्रे लिखित्वा स्थापयति सः । तादृशपत्रैः काश्चन काष्ठपेटिकाः पूरिताः आसन् । कदाचित् बेन्यहूदस्य सुहृत् कश्चन तक्षकः एतद् दृष्ट्वा उक्तवान् – "मित्र ! कश्चन लघुः अग्निस्फुलिङ्गः भवतः एतावतां वर्षाणां तपसः फलस्वरूपं भाण्डागारम् एतत् दग्धुं शक्नुयात्" इति । ततः सः स्वयमेव काश्चन अयःकपाटिकाः क्रीत्वा दत्तवान् । तासु तानि पत्राणि व्यवस्थितं संस्थापितानि ।

शब्दकोषस्य प्रकाशनाय धनस्य महती आवश्यकता आसीत् । तदर्थम् ऋणं प्राप्तुं बेन्यहूदः प्रयत्नम् आरब्धवान् । आंग्लो-पेलस्टीन्वित्तकोषस्य अधिकारिणः तस्य प्रार्थनाम् अङ्गीकृत्य वार्तालापार्थम् आगताः । परन्तु तत्र विकीर्णान् कागदखण्डान् दृष्ट्वा ते अवदन् यत् 'एतदर्थम् ऋणदानं न

शक्यम्' इति । पुनःपुनः प्रार्थिताः ते अन्ते अत्यल्पमेव ऋणं दातुम् अङ्गीकृतवन्तः ।

* * *

कस्मिंश्चित् सुप्रभाते हेम्डा दृष्टवती यत् बेन्झियोनः गृहद्वारे स्थितः अस्ति ! "किम् अभवत् वत्स ? अध्ययनार्थं प्यारिस्नगरं गतः भवान् कथम् आगतः अत्र ?" इति सा अपृच्छत् ।

विचारणेन ज्ञातं यत् बेन्झियोनः अन्यैः छात्रैः सह मिलित्वा विद्यालये प्रवृत्ते कार्यविरामान्दोलने भागं गृहीत्वा प्राचार्येण विद्यालयात् उच्चाटितः सन् आगतः इति ।

"वत्स ! भवता साधु नाचरितम् । इतःपरं किं करिष्यति ?" इति अवदत् हेम्डा । परन्तु बेन्झियोनस्य मनसि पश्चात्तापलेशोऽपि न आसीत् । सः ततः साक्षात् जाफ्फानगरं गतवान् । बालानां गृहपाठं कुर्वता वा जीवितुं शक्यते इति किशोरस्य तस्य मनसि विचारः आगतः आसीत् । तेषु दिनेषु विशेषचिकित्सानिमित्तं बर्लिन्नगरं गतः बेन्यहूदः ततः प्रत्यागत्य पुत्रस्य वार्तां ज्ञातवान् । ततः कथमपि तम् आनाय्य तं येमिमां च अध्ययनाय बर्लिन्नगरं प्रति प्रेषितवान् । परन्तु तत्रापि बेन्झियोनः अध्ययनापेक्षया अन्येषु विषयेषु एव अधिकाम् आसक्तिं दर्शितवान् । पत्रकारवृत्त्या तिनराम् आकृष्टः सः तत्रैव कस्याश्चित् पत्रिकायाः वार्ताहरः जातः । ततः एव सः पितुः पत्रिकायै स्वीयं सर्वप्रथमं हीब्रूलेखमपि प्रेषितवान् ।

* * *

# २३. सफलः यत्नः

"प्रिये ! किम् अनेन कृतेन अकृतेन वा कोषकार्येण ? यदि एतत् प्रकाशनं न प्राप्स्यति तर्हि को वा लाभः अस्य ? न कमपि तादृशम् अत्र पश्यामि यः मम शब्दकोषं प्रकाशयितुम् उत्सहेत... ।"

कदाचित् निराशतया बेन्यहूदः पत्नीं हेम्डाम् अवदत् । सा यथापूर्वं तं समाधातुं प्रयत्नं कृतवती । तथापि सः न समाहितः । "नैव, अहं लेखन-संन्यासं गृह्णामि" इति अवदत् सः ।

"प्रिय ! तथा न वदतु । मह्यं मासत्रयात्मकं कालं ददातु । तावता अहं भवतः शब्दकोषस्य प्रकाशकं कञ्चित् प्राप्स्यामि एव" इति सविश्वासम् उक्तवती आसन्नप्रसवापि हेम्डा ।

ततः 'झाझा'नाम्न्याः तस्याः पुत्र्याः प्रसवानन्तरं मासद्वयात्मकविश्रान्तेः पश्चात् हेम्डा प्रकाशकान्वेषणाय सुदीर्घां प्रवासयोजनां कृतवती । इस्रेल्देशे तादृशः प्रकाशकः न लभ्येत इति भावयन्ती सा युरोपदेशान् एव गन्तुं निश्चितवती । गृहकृत्येषु अनभिज्ञमपि पतिं तत्र नियोज्य शिशूनां पालनेऽपि तमेव उत्तरदायिनं विधाय पत्रिकासम्पादनमपि तदुपरि निक्षिप्य कस्मिंश्चित् शुभदिने नौकया सा प्रस्थानम् अकरोत् एव, शब्दकोषस्य हस्तलिखितैः पत्रैः पूर्णं यानस्यूतं गृहीत्वा । शरीरेण कृशा दुर्बला च सा इतोऽपि त्रयस्त्रिंशद्वर्षीया युवतिः । तन्वङ्ग्याः तस्याः नेत्रयोः अखण्डः आत्मविश्वासः आसीत् ।

हेम्डा प्रथमं बुडापेस्ट्नगरं गतवती । सा जानाति स्म यत् तस्मिन् काले तदेव प्राक्तनविद्यापरिणतानां केन्द्रम् । तत्रत्यानां विदुषाम् अङ्गीकारः यदि प्राप्यते तर्हि शब्दकोषं कोऽपि विना आक्षेपं प्रकाशयिष्यति इति । प्रो० विल्हेमः तेषु अन्यतमः, यस्य परिचयः पत्रद्वारा बेन्यहूदस्य आसीत् । तस्य दर्शनं कृत्वा हेम्डा उक्तवती – "महाभाग ! मम पत्युः प्राणभूतम् एतं शब्दकोषं परिशील्य एतद्विषये भवदीयम् अभिमतं कैश्चित् एव वाक्यैः

विल्हेमः तेषु अन्यतमः, यस्य परिचयः पत्रद्वारा बेन्यहूदस्य आसीत् । तस्य दर्शनं कृत्वा हेम्डा उक्तवती – "महाभाग ! मम पत्युः प्राणभूतम् एतं शब्दकोषं परिशील्य एतद्विषये भवदीयम् अभिमतं कैश्चित् एव वाक्यैः कृपया सूचयतु" इति ।

परन्तु प्रो० विल्हेमः अवदत् – "अहं नितरां व्यस्तः अस्मि । अस्य आपाततः परिशीलनार्थमपि मम अधुना समयः नास्ति । सप्ताहानन्तरं भवती आगच्छतु । तावता किमपि करिष्यामि" इति । पुनः प्रार्थितः अपि सः तदेव उक्तवान् । अनिवार्यतया हेम्डा सप्ताहपर्यन्तं प्रतीक्षां कृतवती ।

परन्तु सप्ताहानन्तरं यदा सः प्राध्यापकः दृष्टः तदा हेम्डा अनुभूतवती यत् स्वस्य तादृशी प्रतीक्षा निष्फला नाभूत् इति । न केवलं प्रो० विल्हमेन, अपि तु तत्सदृशाभ्याम् अन्याभ्यामपि द्वाभ्यां विद्वद्भ्यां तावता शब्दकोषविषये अभिमतं लिखितम् आसीत् । त्रिभिः अपि तैः ऐककण्ठ्येन घोषितम् आसीत् यत् 'बेन्यहूदेन क्रियमाणम् इदम् अभूतपूर्वम् ऐतिहासिकं च कार्यम् । एतदर्थं हीब्रूभाषिणः सर्वेऽपि तस्य अधमर्णाः स्युः' इति ।

परमसन्तुष्टा हेम्डा प्राध्यापकाय धन्यवादान् समर्प्य झटिति ततः प्रस्थाय रेल्यानेन बर्लिन्नगरं प्राप्तवती । तत्र अनेकाः महाप्रकाशनसंस्थाः गत्वा तत्रत्यान् दृष्ट्वा प्रार्थितवती च । अन्ते तु काचन प्रकाशनसंस्था प्रकाशनम् अङ्गयकरोत्, परन्तु समयेन । तस्याः प्रथमः समयः आसीत् यत् अक्षर-संयोजनकार्यम् अन्यत्र एव कारयित्वा दातव्यम् इति । सः हेम्डया अङ्गीकृतः । द्वितीयः समयः आसीत् मुद्रणाय अपेक्षितं धनं हेम्डया एव संगृह्य दातव्यम् इति । तत् कियत् कष्टमिति जानती अपि हेम्डा अङ्गीकृतवती । अन्तिमश्च समयः आसीत् शब्दकोषस्य सर्वेषां भागानां सम्पादनात् पूर्वमेव यदि बेन्यहूदः म्रियेत तर्हि तत् कार्यमपि हेम्डया एव सम्पाद्य दातव्यम् इति । तदपि तया अङ्गीकृतम् । समग्रस्य वार्तालापस्य अनन्तरं सन्धिपत्रे हस्ताङ्कनं कुर्वत्याः तस्याः हस्तः कम्पते स्म, उद्वेगवशात् ।

ततः मासद्वयं यावत् सा बर्लिन्नगरे प्यारिस्नगरे च स्थितानां यहूद्यसङ्घटनानां सम्पर्कं कृतवती । प्रतिसङ्घटनं प्रमुखाः के इति ज्ञात्वा तेषां वैयक्तिकमेलनं

अपेक्षितस्य अर्थराशेः आश्वासनं प्राप्तवती । पतिं यदा तन्त्रीवार्ताद्वारा एतं विषयं निवेदितवती तदा बेन्यहूदः तत्र विश्वसितुमपि न शक्तः । 'किम् एषः स्वप्नः ?' इति आत्मानम् अपृच्छत् सः ।

हेम्डा यदा जेरुसलेंनगरं प्रत्यागता तस्मिन् एव सप्ताहे बेन्यहूदपरिवारेण गृहे कश्चन उत्सवः आयोजितः । बेन्यहूदस्य पञ्चाशत्तमं जन्मदिनं निमित्तीकृत्य आयोजिते तस्मिन् उत्सवे सद्यःप्राप्ता कोषप्रकाशनवार्ता एव सर्वेषां वार्तालापविषयः आसीत् । मुद्राप्यमाणस्य शब्दकोषस्य प्रथमभागस्य कृत्रिमा प्रतिकृतिः काचित् हेम्डया सज्जीकृता आसीत् । बृहदाकारस्य परन्तु रिक्तपत्रैः उपेतस्य तस्य पुस्तकस्य आवरणपत्रे सुवर्णवर्णैः स्थूलाक्षरैः मुद्रितम् आसीत् – 'प्राचीनहीब्रूभाषायाः आधुनिक-हीब्रूभाषयाश्च समग्रः शब्दकोषः' इति; तस्य अधः 'एलिसर् बेन्यहूदः' इति ।

तस्य दर्शनेन बेन्यहूदः भावाविष्टः अभवत् । यद्यपि पूर्वमपि कश्चन भागः तेन प्रकाशितः आसीत्, सः असमग्रः अनुत्तमश्च आसीत् । एतादृशं सौन्दर्यं तस्य न आसीत् । 'यदि एतेन एव रूपेण सर्वे भागाः प्रकाशिताः स्युः.. तर्हि.. !'

ततः तदेकचित्ततया सः कोषकार्यमेव अनुवर्तितवान् । अक्षरसंयोजनम्, तद्गतमुद्रणदोषपरिष्कारः इत्यादिषु अपि साहाय्यम् आचरितवान् । कोषे प्रत्येकं हीब्रूशब्दस्य पुरतः आंग्ल-फ्रेञ्च्-जर्मन्-भाषाणां समानार्थकाः शब्दाः भवन्ति स्म । तत्सम्बद्धाः अन्येऽपि शब्दाः तत्र संगृहीताः । तेषां प्रयोगप्रकारः अपि दर्शितः आसीत् । निश्चयेनापि सः कश्चन अद्वितीयः कोषः आसीत् ।

* * *

ततः प्रायः वर्षानन्तरं शब्दकोषस्य प्रथमः भागः प्रकाशितः अभवत् । तावता बर्लिन्तः प्रतिनिवृत्तः बेन्झियोनः तत्र प्राप्तम् अनुभवम् आधारीकृत्य पूर्णरूपेण पत्रकारः सन् जीवामि इति निश्चयं कृत्वा हीब्रूभाषया 'हाउर'-नामिकायाः दिनपत्रिकायाः प्रकाशनम् आरब्धवान् । तस्य अनुजा येमिमा अपि अधुना प्राप्तवयस्का आसीत् । सा स्वयमेव स्वस्य प्रियकरं चितवती । जर्मन्देशीयम् अभिनेतारं तं युवकं बेन्यहूदः स्पष्टशब्दैः अवदत् – ''यदि

भवान् हीब्रूभाषया भाषते, यदि पत्न्याः परिवारस्य च पालने भवतः सामर्थ्यम् अस्ति, यदि च भवान् इस्रेल्देशे एव निवत्स्यति तर्हि भवतः येमिमायाः पाणिग्रहणे मम न कोऽपि विरोधः'' इति । सः सर्वमपि अनुमतवान् । येमिमा तं परिणीतवती च । बेन्झियोनः अपि स्पेन्देशे जातां काञ्चित् युवतिं परिणीतवान् ।

शब्दकोषस्य प्रथमभागस्य प्रकाशनानन्तरं बेन्यहूदः निर्णीतवान् यत् भूरियत्नः कृतः चेत् अपि वर्षाभ्यन्तरे एकस्य एव भागस्य सम्पादनं प्रकाशनं च शक्यम् इति । तन्मध्ये अर्थसमस्यापि आसीदेव । हेम्डा कदाचित् तं बर्लिन्नगरं नीतवती । तत्र ये प्रथमभागस्य प्रकाशने अर्थसाहाय्यं कृतवन्तः तेषां पत्युः परिचयं कारितवती । ते नितरां सन्तुष्टाः अभवन् । ततः हेम्डा पुनरपि तं लेखनकार्ये नियोज्य स्वयम् अर्थसङ्ग्रहणे मग्ना अभवत् । पत्युः ग्रन्थस्य प्रकाशने न कापि पत्नी तावन्तं श्रमम् ऊढवती स्यात् यथा हेम्डा ! कुतश्चित् कथमपि धनं संगृह्णती सा कोषप्रकाशनं सम्पादितवती ।

अत्रान्तरे देशस्य राजकीयपरिवेषेऽपि कानिचित् परिवर्तनानि आगतनि । तुर्किदेशे प्रवृत्तेन आन्दोलनेन तत्रत्यः सम्राट् द्वितीयः अब्दुल्हमीदः पदच्युतः अभवत् । तत्स्थाने आगतं नूतनं शासनं यहूद्यानाम् उपरि हमीदेन पूर्वम् आरोपितान् निर्बन्धान् निस्सारयामास । यहूद्याः सर्वे इस्रेल्देशं गन्तुम् अनुमताः । पत्रिकाप्रकाशनेऽपि ते स्वतन्त्राः अभूवन् । विद्यालयेषु हीब्रूभाषायाः पाठनविषयेऽपि तस्य आक्षेपः नासीत् । बेन्यहूदस्य प्रेरणया अनेकेषु विद्यालयेषु हीब्रूमाध्यमेन सर्वेषामपि विषयाणां पाठनमपि आरब्धम् ।

जर्मन्देशीयानां यहूद्यानाम् अर्थसाहाय्येन 'हैफा' इत्यत्र आभियान्त्रिक-विद्यालयः कश्चन आरब्धः । तत्र शिक्षणमाध्यमं जर्मन्भाषा भवतु इति तेषाम् अनुरोधः आसीत् । हीब्रू एव भवतु इति बेन्यहूदस्य अनुरोधः । परन्तु विद्यालयस्य व्यवस्थापकप्रमुखः कोहेनः तस्य वचनं श्रोतुमपि नैच्छत् । वार्तालापार्थं गतं बेन्यहूदम् अन्तः न प्रवेशितवान् अपि सः । तथापि मार्गमध्ये एव तं दृष्ट्वा अवदत् बेन्यहूदः – ''मित्र ! एतदर्थमेव बर्लिन्नगरं गत्वा भवता धनदातारः निवेदनीयाः । तेषां मनःपरिवर्तनं कृत्वा हीब्रूभाषया

पाठनविषये तेषाम् अङ्गीकारः प्राप्तव्यः'' इति ।

परन्तु कोहेनः स्पष्टशब्दैः तत् निराकृतवान् । तदा तु रौद्रावतारः बेन्यहूदः अगर्जत् – ''बर्लिन्नगरे मम सन्देशः भवता श्रावणीयः यद् यदि अस्मिन् विद्यालये हीब्रूमाध्यमं न भविष्यति तर्हि प्रवक्ष्यति तत्र रुधिरधारा । नाहम् उत्तरादायी तदनन्तरं यत् प्रवर्तिष्यते तस्य ।''

तथापि कोहेनः बर्लिन्नगरं न गतवान् । ततः बेन्यहूदः विद्यालयस्य शिक्षकाणां छात्राणां च सङ्घटनं कृतवान् । ते सर्वे मिलित्वा आन्दोलनम् आरभन्त । कक्ष्याः बहिष्कृताः । विद्यालयः पिहितः । जर्मन्भाषया मुद्रितानि पाठपुस्तकानि तैः दग्धानि । भाषाविवादः एषः अनेकमासान् यावत् प्राचलत् । अन्ते च बेन्यहूदस्य विचारस्य एव जयः अभवत् ।

* * *

१९१४तमे क्रिस्ताब्दे विश्वमहायुद्धम् आरब्धम् । युद्धस्य परिणामाः इस्रेल्देशेऽपि दृष्टाः । सः अन्यदेशेभ्यः सम्पर्कहीनः जातः । वस्तूनां मूल्ये महती वृद्धिः जाता । एतावता शब्दकोषस्य पञ्च एव भागाः प्रकाशिताः आसन् । ततः अग्रिमस्य कार्यकरणमपि शक्यं नासीत् । बेन्यहूदस्य वर्धमानम् अस्वास्थ्यम् अभिलक्ष्य हेम्डा चिन्तितवती यत् – 'अत्र कार्यकरणं सर्वथा अशक्यम् । यदि अस्माभिः अमेरिकां प्रति गम्यते तर्हि तत्र स्थित्वा बेन्यहूदः विना विघ्नं कोषकार्यम् अनुवर्तयितुं शक्नोति' इति । परं तं विचारं बेन्यहूदः नाङ्गीकृतवान् । हेम्डा विभिन्नप्रकारकैः वादैः अनुनयं कृत्वा कथमपि तस्य अङ्गीकारं प्राप्तवती । ततः शीघ्रं प्रवृत्तः प्रस्थानसन्नाहः । सुदीर्घकालस्य निमित्तं गृहरक्षणस्य व्यवस्थां कृत्वा त्रिभिः अपत्यैः सह तौ प्रस्थितौ । तेषु दिनेषु परिवहणव्यवस्था नियता नासीत् । कदाचिदेव काश्चन नौकाः गच्छन्ति स्म । जाफ्फातः कस्याश्चित् नौकायाः प्रस्थानं निश्चितम् आसीत् । तया प्रयाणं कर्तव्यमिति तैः जाफ्फानगरं गतम् । तत्र यदा तैः नौकापत्तनं प्राप्य नौकारोहणार्थम् उद्युक्तं तदा तत्रत्यः अधिकारी तदानीमेव आत्मना प्राप्तम् आज्ञापत्रं दर्शितवान् यत् 'देशत्यागाय नानुमन्तव्यः बेन्यहूदः । सः जेरूसलें प्रत्यावर्तनीयः' इति ।

निरुपायः बेन्यहूदः सपरिवारं प्रत्यागतः । ततः हेम्डा परिचितानां वरिष्ठानाम् अधिकारिणां प्रभावम् उपयुज्य अनुमतिं प्राप्तुं प्रयत्नम् अकरोत् । अन्ते च तत्र सफला अपि अभवत् । परन्तु हन्त ! तेषु दिनेषु ततः गन्त्री कापि नौका एव न आसीत् !

ततः पक्षानन्तरं जाफ्फातः काचित् नौका प्रतिष्ठते इति वार्ता श्रुता । अतः पुनरपि सर्वाः सज्जताः कृत्वा तैः प्रस्थितम् । नौकारोहणात्पूर्वं जाफ्फायां तेषां पारपत्रपरिशीलनं कृतवान् वरिष्ठः कश्चन तुर्कीयः सैन्याधिकारी बेन्यहूदस्य पारपत्रोपरि स्वीयया भाषया रक्ताक्षरैः विलिख्य दत्तवान् – 'अयम् अपायकारी पत्रकारः । सर्वथा नानुमन्तव्यः देशत्यागाय' इति !

अस्मिन् अपि अवसरे गमनात् वञ्चिताः अभवन् ते ।

* * *

# २४. स्वप्नः आप साकारताम्

ततः प्रत्यागतानां तेषां मासद्वयम् अतीतम् । कार्यानुकूलं वातावरणं नासीत् इत्यतः कोषकार्ये प्रगतिरेव नाभवत् । अन्ते च तुर्कीयसेनायाः दण्डनायकस्य 'जमाल पाषा'नामकस्य विशेषप्रभावम् उपयुज्य हेम्डा अमेरिकागमनाय अनुमतिप्राप्तौ सफला अभूत् । परन्तु तदानीमपि कापि नौका नासीदेव । तथापि ते जाफ्फानगरम् आगताः । ततः अलेक्सांड्रियां प्रति गन्त्री ग्रीक्देशीया भारवाहकनौका काचित् आसीत् । नौकानायकः तान् तावत्पर्यन्तं नेतुम् अङ्गीकृतवान् । सुखेन ते अलेक्सांड्रियां प्राप्तवन्तः । ततः केषाञ्चित् दिनानाम् अनन्तरम् अन्यया ग्रीक्नौकया प्रयाय अमेरिकां प्राप्तवन्तः च । बेन्यहूदस्य बन्धुः कश्चन स्वगृहे तेषां वासादिव्यवस्थाः कल्पितवान् ।

बेन्यहूदस्य अमेरिकागमनवार्ता तत्रत्यानां यहूद्यानां मध्ये प्रसृता । तादृशस्य महतः आन्दोलनस्य प्रवर्तयितारं शब्दकोषस्य निर्मातारं च तं स्वागतीकर्तुं ते कश्चन समारोहम् आयोजितवन्तः । बेन्यहूदः तत् न ऐच्छत् । तथापि ते कार्यक्रमं समायोजयन् एव । भूरि प्रचारोऽपि कृतः । कार्यक्रमदिने सभागारम् अभिमानिभिः पूर्णम् आसीत् । हेम्डासहितः बेन्यहूदः यदा तत्र प्राप्तवान् तदा तु तत्र तावान् सम्मर्दः आसीत् यत् मुख्यातिथेः तस्यापि अन्तः प्रवेशः अत्यन्तं कष्टेन एव अभवत् । तत्र हीब्रूभाषया एव कृतं तदीयं भाषणं सर्वेषामपि यहूद्यानां मनांसि अहरत् । ततः अन्येषु अपि यहूद्यसङ्घेषु तादृशाः कार्यक्रमाः अभवन् । तेन शब्दकोषनिर्माणयोजनायाः अपि पर्याप्तः प्रचारः लब्धः । ततः न्यूयार्क्नगरे तिष्ठन् तत्रैव कोषकार्यम् अनुवर्तितवान् बेन्यहूदः ।

* * *

१९१७तमे क्रिस्ताब्दे अमेरिका अपि मित्रपक्षीयाणां राष्ट्राणाम् पक्षधरत्वेन युद्धभूमिम् अवातरत् । तेन विश्वमहायुद्धस्य रूपमेव परिवर्तितम् अभवत् । अमेरिकायां स्थिताः बहवः यहूद्याः अपि सैन्यं प्रविश्य युद्धे

भागम् अवहन् । तस्य एव वर्षस्य नवेम्बर्मासे ब्रिटन्देशः स्पष्टशब्दैः अघोषयत् यत् 'विश्वस्य विविधभागेषु विकीर्णाः यहूद्याः स्वीयां मातृभूमिम् इस्त्रेल्देशं गच्छन्तु । पेलस्टीन् एव तेषां मातृभूमिः । तेषां तत्र गमने अस्माकं सहकारः अपि अस्ति' इति । एतस्याः वार्तायाः श्रवणेन बेन्यहूदः तावन्तम् आनन्दं प्राप्तवान् यत् सः स्वयं नृत्यमेव अकरोत् । यतः सः जानाति स्म यत् ब्रिटिश्शासनस्य सः आशयः तत्पक्षधराणां सर्वेषामपि राष्ट्राणाम् अपि भवति । तेन ते सर्वेऽपि देशाः स्वेन यदर्थम् अद्यपर्यन्तं यत्नः कृतः आसीत् तस्य विचारस्य अङ्गीकारपुरस्सरं पोषणमपि अकुर्वन् इति । तां वार्तां ज्ञातवन्तः अन्ये नागरिकाः सर्वे मिलित्वा तद्दिने उत्सवम् आचरितवन्तः ।

तस्य एव वर्षस्य डिसेम्बर्मासे जनरल् एड्मण्ड् अलेन्बीनामकस्य सेनाधिकारिणः नायकत्वे आगतं ब्रिटिश्सैन्यं जेरूसलेंनगरं प्राविशत् । तच्च सैन्यं चतुश्शताधिकवर्षेभ्यः तस्य पवित्रनगरस्य स्वाम्यं रक्षितवतः तुर्कीयान् जनान् ततः निस्सङ्कोचं निर्वासितान् अकारयत् । तुर्कीयाधिकारिणां कपिमुष्टितः एवं स्वातन्त्र्यम् आप्नोत् तत् पवित्रनगरम् । तस्मिन् एव मासे तस्य नगरस्य पार्श्वस्थे स्कोपस्पर्वते कस्यचन महाविद्यालयस्य निमित्तं शिलान्यासः अपि कृतः । यश्च महाविद्यालयः अग्रे विश्वविद्यालयत्वेन परिणतः सन् समग्रस्य मध्यप्राच्यस्य ज्ञानकेन्द्रत्वेन सुप्रसिद्धः अभवत् । एतदुभयमपि बेंन्यहूदस्य दृष्ट्या अत्यन्तम् अविस्मरणीयं घटनाचक्रं जातम् ।

* * *

जगतः पुरातनभाषात्वेन प्रसिद्धायां ग्रीक्भाषायां रोमन्भाषायां वा अतिविशिष्टं पुराणसाहित्यम् अस्ति । परन्तु हीब्रूभाषायां वैपुल्येन तादृशं साहित्यं नोपलभ्यते – इति कदाचित् अनुभूतं बेन्यहूदेन । अतः कोष-कार्यनिमग्नः सः तदभ्यन्तरे एव मध्ये मध्ये तादृशमपि किञ्चित् लेखितुं प्रवृत्तः अभवत् । परन्तु सः एतं विषयं हेम्डा अपि यथा न जानीयात् तथा बुद्ध्या गोपितवान् आसीत् । १९१७तमे वर्षे यदा तेन स्वस्य द्वितीय-विवाहस्य रजतमहोत्सवः आचरितः तदा समागतानाम् अतिथीनां पुरतः स्वेन रचितस्य नूतनस्य पुराणग्रन्थस्य हस्तलिखितां प्रतिकृतिम् उपस्थापयन्

सः अवदत् – "मम प्रियपत्न्यै शुभावसरेऽस्मिन् मया दीयमानम् उपायनम् एतत्" इति। पुस्तकस्य प्रथमे पृष्ठे तेन तद् वाक्यं लिखितमपि आसीत्। सः अवदत् – "एतस्यां पुस्तकमालायाम् एतदतिरिच्य अन्यानि अपि सप्त पुस्तकनि लेखिष्यन्ते यत्र बैबलू-उत्तरकालिकानि १४० कथानकानि ग्रथितानि भवन्ति। 'हीब्रूभाषायाः पितरः' इति भवति आस्याः ग्रन्थमालायाः नाम" इति।

अनन्तरकाले विमर्शकैः अभिप्रेतं यत् बेन्यहूदेन विरचितस्य शब्दकोषस्य यावत् महत्त्वम् अस्ति तावदेव महत्त्वम् अस्याः ग्रन्थमालायाः अपि अस्ति इति। यतः सा ग्रन्थमाला हीब्रूभाषाविषयिणीं काञ्चित् न्यूनताम् अपूरयत्।

* * *

यद्यपि अमेरिकायां बेन्यहूदस्य लेखनकार्यं निर्विघ्नतया प्रचलति स्म, तथापि तस्य मनः तत्र न रमते। कदा स्वदेशं गमिष्यामि इत्येव चिन्ता तस्य। परन्तु सः सम्यक् जानाति स्म यत् यावत् विश्वमहायुद्धं समाप्तं न भवति तावत् स्वस्य इस्त्रेल्गमनमपि नैव शक्यम् इति। अतः सः युद्ध-समाप्तेः वार्तामेव प्रतीक्षमाणः कथमपि दिनानि अयापयत्।

अनन्तरवर्षे विश्वमहायुद्धं समाप्तिं गतम्। तद्वार्ताश्रवणसमनन्तरम् एव सः पत्नीम् अवदत् – "प्रिये! इतःपरं विलम्बः नैव कर्तव्यः। स्वदेशगमनस्य सन्नाहः करणीयः।"

सापि अङ्गीकृतवती। परन्तु सर्वैः मित्रैः सूचितं यत् "कञ्चित् कालं यावत् प्रतीक्षा क्रियताम्। तावता जेरूसलेंनगरस्य वातावरणमपि किञ्चित् अनुकूलं भवेत्। तत्र गमनाय यातायातव्यवस्था अपि सुष्ठु भवेत्" इति। किन्तु बेन्यहूदः केषाञ्चिदेव दिनानाम् अनन्तरं स्वीयं प्रस्थानं निश्चितवान्। बेन्यहूदस्य प्रस्थानविषयः अमेरिकानिवासिनां यहूद्यानां मध्ये महत् वार्तात्वम् आप्नोत्। ते सर्वे मिलित्वा कस्याञ्चित् यहूदीयसंस्थायाः आश्रये तस्य आप्रच्छनकार्यक्रमम् आयोजितवन्तः। कार्यक्रमस्य अन्ते तैः दशसहस्रडालर्-मितमूल्ययुतं देयादेशपत्रं तस्मै समर्पितं येन सः अग्रे निर्बाधं स्वीयं लेखनकार्यम् अनुवर्तयेत् इति तेषाम् आशयः आसीत्।

तेभ्यः कृतज्ञताः ज्ञापयन् बेन्यहूदः स्वीये भाषणे अवदत् – ''केभ्यश्चित् वर्षेभ्यः पूर्वं मम पत्नी मां सूचितवती आसीत् यत् 'यदा यदा शक्यते तदा तदा किञ्चित् वा धनं सञ्चिनोतु, येन भविष्यत्काले कदाचित् वयं स्वकीयमेव किञ्चित् गृहं निर्मातुं शक्नुयाम' इति । परन्तु तदा सर्वदा अहम् उक्तवान् यत् लब्धं सर्वमपि धनं कोषकार्याय एव विनियोक्तव्यम् । यतः तच्च कार्यम् अस्माकं बान्धवानां राष्ट्रनिर्माणकार्ये उपकारकं भवति । राष्ट्रनिर्माणं यदा कृतं भवति तदा मदीयाः देशबान्धवाः मम निमित्तमपि गृहं निर्माय कुतो न यच्छन्ति ?' इति । मम कथनम् इदानीं सत्यताम् आप्तोत्'' इति ।

* * *

बेन्यहूदपरिवारः सुदीर्घं प्रयाणं परिसमाप्य यदा जेरूसलेंनगरं प्राप्नोत् तदा तत्र ब्रिटिष्शासनेन नियुक्तः राज्यपालः सर्रोनाड् स्टारः हीब्रूभाषया एव वाक्यद्वयकथनपूर्वकं स्वयमेव तस्य स्वागतम् अकरोत् । तेन रोमाञ्चितः बेन्यहूदः पत्नीम् अवदत् – ''प्रिये ! अयमासीत् मम स्वप्नः । नाहं विश्वसितुं शक्नोमि यदेषः साकारतां गतः । तुर्कीयाः इतः निर्गताः । तत्स्थाने अस्मदीयाः ब्रिटिष्जनाः सन्ति । तेषां प्रमुखः अस्मान् स्वागतीकरोति । तदपि हीब्रूभाषया !''

परन्तु कश्चन विशेषः तु तेन लक्षितः यत् जेरूसलेंनगरस्य निवासिनः केऽपि तस्य स्वागतार्थं न आगतवन्तः आसन् । न केवलं तावत्, अपि तु तेन अनुभूतं यत् तत्पश्चात् तेषु कोऽपि स्वस्य परिवारेण मेलितुमपि न ऐच्छत् इति । किं कारणं स्यात् तस्य ?

ते यदा स्वीयं पूर्वतनं गृहं प्राप्तवन्तः तदा तत्रत्यं दृश्यं तान् विस्मितान् अकारयत् । गमनसमये यद्यपि तैः गृहरक्षणस्य काञ्चित् व्यवस्थां कृत्वा ततः गतम् आसीत्, परन्तु अधुना तु तत्र सर्वम् अपि अव्यवस्थितम् आसीत् । गृहस्य अनेकानि वस्तूनि अदृश्यानि आसन् । गृहस्य वितर्दिकायाम् अपरिचिताः केचन निवासमपि कुर्वन्तः आसन् । सौभाग्यवशात् तालद्वयनिबद्धः बेन्यहूदस्य अध्ययनप्रकोष्ठः तु पूर्णतया सुरक्षितः आसीत् । अव्यवस्थितस्य गृहस्य यथास्थितिप्रापणे तेषां महान् एव कालः आवश्यकः

जातः ।

स्वस्य आगमनविषये नागरिकाणां निरासक्तेः मौनस्य वा कारणं किमिति एकदिनाभ्यन्तरे बेन्यहूदेन ज्ञातम् । तेषां दृष्ट्या जेरूसलेंनगरं विहाय अमेरिकागमनेन तेन अपराधः कृतः आसीत् । 'येन स्वातन्त्र्यविषये मातृभूमिविषये वा आजीवनम् उच्चकण्ठेन भाषणं कृतं सोऽयं जनः देशस्य कष्टकाले देशविमुखः सन् प्राणभीत्या इव सुरक्षितम् अमेरिकादेशं गत्वा तत्र सुखेन न्यवसत् ! देशे अपगतकष्टे सति अधुना पुनरायातः । कीदृशम् इदं देशप्रेम !' - एतदासीत् तेषां चिन्तनम् । अतः एव ते तद्विषये निरासक्ताः आसन् ।

"ते भवदीयं जीवनकार्यम् इतोऽपि नावगतवन्तः । अतः एवं चिन्तयन्ति । तावता भवता खेदः न करणीयः" - पतिं सान्त्वयन्ती अवदत् हेम्डा ।

परन्तु बेन्यहूदः न समाहितः । "प्रिये ! तेषां चिन्तनम् उचितमेव । मया तु दोषः एव कृतः । आपत्स्थितौ पलायनं कृतवता मया अनुचितम् आचरितम् । कथमपि अस्य प्रायश्चित्तं मया करणीयम् । भवतु, मया करणीयानि कार्याणि इतोऽपि निष्ठया श्रद्धया च कुर्वन् तेन मनश्शान्तिं प्राप्स्यामि" इति सः उक्तवान् ।

* * *

# २८. अपूर्णं निवेदनम्

सर् हर्बर्ट् स्यामुयल्नामकः यहूद्यः एव इस्रेल्देशे ब्रिटिश्राजप्रतिनिधि-(हैकमिषनर्)रूपेण नियुक्तः अभवत् । सोऽयं स्यामुयलः यदा बालः आसीत् तदा लण्डन्नगरे कस्यचित् बन्धोः गृहे बेन्यहूदस्य परिचयं प्राप्तवान् आसीत् । सः एव अत्र राजप्रतिनिधिरूपेण अगतः इति कृत्वा बेन्यहूदः नितरां सन्तुष्टः अभवत् । जेरूसलेंनगरागमनानन्तरं प्रथमे 'सब्बत्'पर्वदिने स्यामुयलः सामान्यः जनः इव प्रार्थनामन्दिरं गत्वा तत्र 'तोरा'धर्मग्रन्थं पठित्वा प्रार्थनां कृतवान् । तस्मिन् दिने बेन्यहूदः अपि तदेव पार्थनामन्दिरं गतः आसीत् । एषु दिनेषु तस्य व्यवहारे धार्मिकसम्प्रदायानाम् अनुसरणम् अधिकतया दृश्यते स्म । सः नियतरूपेण साम्प्रदायिकवेषेण एव मन्दिरं गच्छति । अद्य मन्दिरं गतः सः तत्र 'तोरा'ग्रन्थस्थाः हीब्रूभाषानिबद्धाः पङ्क्तीः पठन्तं राजप्रतिनिधिं दृष्ट्वा अतीव सन्तुष्टः अभवत् । झटिति बेन्यहूदस्य मनसि तस्य प्रसङ्गस्य स्मरणम् अभवत् यदा तं धर्मद्रोहिणं भावयन्तः तदीयाः एव यहूद्यबान्धवाः तस्य विरोधप्रदर्शनरूपेण प्रार्थनामन्दिरे कृष्णसिक्थवर्तिकाः ज्वालितवन्तः आसन् । परन्तु अद्य स एव जनः तैः एव यहूद्यबान्धवैः सह राजप्रतिनिधेः समक्षं हीब्रूभाषया एव प्रार्थनां कुर्वन् अस्ति ! अहो, कीदृशं परिवर्तनम् !

* * *

अनतिकाले एव स्यामुयलः आज्ञां प्रसारितवान् यत् इंग्लिश्, अराबिक्, हीब्रू – इत्येताः तिस्रः अपि भाषाः देशस्य अधिकृताः व्यवहारभाषाः इति । न केवलम् आज्ञां कृतवान् सः, अपि तु अल्पेन कालेन सः स्वयमपि हीब्रूभाषया सम्भाषणस्य अभ्यासं कृतवान् । "अहं तु आंग्लभाषया वदामि" इति वदन्ती तस्य पत्नी अपि अल्पकालेन हीब्रूसम्भाषणकौशलं प्राप्तवती । सहजतया तयोः अपत्यैः अपि हीब्रूभाषाभ्यासः कृतः । 'महाजनो येन गतः स पन्थाः' इति वचनमपि अत्र सार्थकतां गतम् । सर्वेऽपि जनाः तेषाम्

अनुसरणं कुर्वन्तः हीब्रूभाषाभ्यासं कृतवन्तः । एतदनन्तरं देशे सर्वत्र हीब्रूशिक्षणस्य अभिरुचिः परां कोटिं गता । तेन झटिति सर्वत्र हीब्रू-शिक्षकाणाम् आवश्यकता अनुभूता । औपचारिकरूपेण अनौपचारिकरूपेण च सार्वजनिकानां हीब्रूसम्भाषणशिक्षणं कर्तुं बहवः उद्युक्ताः अभवन् । बहूनां नित्यव्यवहारे हीब्रूभाषा यदा आगता तदा नूतनानां हीब्रूशब्दानाम् न्यूनता अनुभूता । जनाः सहजतया नूतनशब्दानां निमित्तं शब्दस्त्रष्टुः बेन्यहूदस्य एव उपसर्पणम् अकुर्वन् । "पत्रालयः इत्यर्थे कः शब्दः प्रयोक्तव्यः ?", "आणिः - इत्येतत् हीब्रूभाषया कथं वक्तव्यम् ?", "क्रीडासाधनस्य 'ब्याट्' इत्यस्य समानार्थकः शब्दः कः ?" - इत्येवंप्रकारेण ते तं पीडयितुम् आरभन्त । प्रवर्धितम् एतत् उत्तरदायित्वं स्मरन् बेन्यहूदः कोषकार्ये पूर्णतया व्यापृतः अभवत् । तेषाम् अपेक्षाः पूरयितुम् अहोरात्रं कार्यं कुर्वन् शब्दान् सृष्टवान् सः ।

* * *

यद्यपि इदानीम् इस्रेल्देशे अरब्बीयानां स्थाने ब्रिटिश्जनानां शासनम् आसीत्, ब्रिटिश्राजप्रतिनिधिः स्यामुयलः अपि कश्चन यहूदीयः एव, तथापि तावतापि पूर्णं स्वातन्त्र्यं न प्राप्तम् आसीत् इस्रेलीयैः यहूद्यैः । अतः ते शनैः शनैः ब्रिटिश्शासनविषये स्वीयम् असन्तोषं प्रकटयितुम् आरभन्त । तुर्कीयानां निस्सारणे ये साहाय्यं कृतवन्तः आसन् ते एव इदानीं ब्रिटिश्शासनं विरुद्ध्य आन्दोलनम् आरब्धवन्तः । तादृशेषु प्रमुखेषु आन्दोलनकर्तृषु बेन्यहूदस्य पुत्रः बेन्झियोनः अपि अन्यतमः आसीत् । गच्छता कालेन आन्दोलनं तीव्रतरं जातम् । इस्रेलीयैः यहूद्यैः सह मिलित्वा अरब्बीयाः जनाः अपि ब्रिटिश्शासनं विरुद्ध्य कार्याणि अकुर्वन् । तेषां दमनाय ब्रिटिश्शासनेन सैन्यस्य उपयोगः कृतः । ब्रिटिश्सैन्ये स्थिताः यहूद्याः सैनिकाः अधिकारिणश्च एव इस्रेलीयान् यहूद्यान् अमानुषरूपेण अमारयन् । नवोदिते यहूद्यराष्ट्रे यहूद्यानामेव रक्तं जलमिव प्रावहत् । जाबोटिन्स्कनामकः रूस्देशे जातः यहूद्यः तादृशानां बहूनाम् अतृप्तानां नायकत्वं वहन् शासनविरुद्धम् आन्दोलनं तीव्रतरम् अकरोत् । 'सशस्त्रयुद्धार्थम् अपि अस्माभिः सज्जैः भवितव्यम्'

इत्यपि सः यहूद्यबान्धवान् प्रेरितवान् । परिणामतः अनुचरैः समेतस्य तस्य बन्धनं कारितं ब्रिटिश्शासनेन । मुण्डितशिरस्कं कृत्वा ततः पञ्चदशवर्षात्मकेन सश्रमकारावासदण्डनेन तम् अदण्डयत् तत् । एतेन सर्वेऽपि इस्त्रेल्देशीयाः यहूद्याः नितरां रुष्टाः अभवन् । जाबोटिन्स्केः कारावासोऽपि ईजिप्ट्देशे भवतु इति निर्णीतं शासनेन । तदर्थं नौकया सः तत्र प्रेषितः अपि । एतैः सर्वैः प्रकरणैः बेन्यहूदः अपि ब्रिटिश्शासनविषये असन्तुष्टः अभवत् । जाबोटिन्स्केः देशान्तरप्रेषणं विरुद्ध्य जनमतसंग्रहणाय सः उद्युक्तः अभवत् । जाबोटिन्स्किपत्न्याः हेम्डायाश्च मेलनं कारयित्वा एतदर्थं ताभ्यां लण्डन्नगरमेव गत्वा प्रयत्नः करणीयः इत्यपि ते बोधितवान् सः । परन्तु तावता जनाभिप्राय-विरुद्धम् आचरितुम् अनिच्छता शासनेन जाबोटिन्स्किः पुनः इस्त्रेल्देशमेव आनीतः । ततः केषाञ्चित् मासानाम् अनन्तरं सः कारामुक्तः अपि कृतः ।

तत्पश्चात् ब्रिटिश्राजप्रतिनिधिना आज्ञा कृता यत् 'इतःपरं कोऽपि यहूदीयः बाह्यदेशात् इस्त्रेल्देशं न आगच्छेत्' इति । एषः तु बेन्यहूदेन जीवने प्रतिपादितस्य मुख्यध्येयस्य एव विरुद्धः विचारः आसीत् । सः प्रतिपादितवान् आसीत् यत् बहिः स्थिताः सर्वेऽपि यहूद्याः मातृभूमिम् अगच्छेयुः, तत्र एव निवसेयुः इति । टर्क्शासनकाले तु तस्य अवसरः नासीत् । इदानीं ब्रिटिश्शासनेऽपि पुनः तादृशी आज्ञा ! बेन्यहूदः प्रबलरूपेण तस्य विरोधं कृतवान् । परन्तु किमपि प्रयोजनं नाभवत् । तदा बेन्यहूदः मित्रैः सहकारिभिश्च सह मिलित्वा चिन्तितवान् यत् 'शासनं विरुध्य अवैध-रूपेणापि भवतु नाम, एतत्तु करणीयमेव' इति । तावता तस्य तन्मित्राणां च निवेदनं श्रुत्वा षट्सहस्राधिकाः यहूद्याः निवासाय इस्त्रेल्देशम् आगन्तुं सन्नद्धाः आसन् । अधुना तु एतादृशी राजाज्ञा ! अतः तेऽपि विचलिताः अभवन् । अत्र आगन्तुकामैः तैः पूर्वं यत्र उषितं तस्मिन् देशे आरब्धम् उद्यमादिकमपि परित्यक्तम् आसीत् । इदानीं ते 'इतोभ्रष्टाः ततोभ्रष्टाः' इति स्थितिं प्राप्नुवन् । तैः आर्थिकसाहाय्यम् अपि अपेक्षितम् आसीत् । इदानीं किं करणीयम् ?

कश्चन उपायः स्फुरितः बेन्यहूदस्य मनसि । बाह्यदेशेषु स्थिताः यहूद्याः एषु दिनेषु इस्त्रेल्देशे विद्यालयसञ्चालनाय भूरि धनं यच्छन्ति स्म । प्रतिमासं तेभ्यः महापरिमाणकं धनं तेभ्यः विद्यालयेभ्यः आगच्छति स्म । ते च विद्यालयाः अपि बेन्यहूदस्य प्रेरणया एव आरब्धाः आसन्, यत्र हीब्रू एव शिक्षणमाध्यमम् आसीत् । 'यदि कांश्चन मासान् यावत् ते विद्यालयाः पिहिताः क्रियन्ते तर्हि तेन धनेन एतेषां व्यवस्थां कर्तुं शक्यते !'

परन्तु बेन्यहूदः यदा एतं विचारम् उक्तवान् तदा जनेभ्यः महान् विरोधः आगतः । 'एषः महान् द्रोही अस्ति । हीब्रूभाषायै द्रुह्यति एषः । पूर्वं स्वेन प्रतिपादितान् विचारान् परित्यज्य अद्य तद्विरुद्धम् आचराति अयम्' इति ते तम् अनिन्दन् ! येषां निमित्तं तेन स्वीये अन्तरङ्गे सर्वाधिकं स्थानं दत्तम् आसीत् ते हीब्रूशिक्षकाः एव कठोरशब्दैः तम् अनिन्दन् । तस्य मुखदर्शनमपि कर्तुम् अनिच्छन्तः ते कस्मिंश्चित् मार्गे गच्छन्तं तं विज्ञाय तं मार्गमेव विहाय अन्येन मार्गेण चलन्ति स्म ! अधुनापि बेन्यहूदेन तादृशः एव अनुभवः प्राप्तः यत् पूर्वं यदा तम् उद्दिश्य सामजिकबहिष्कारः घोषितः आसीत् ! 'हन्त ! मम जीवितोद्देशं नावगच्छन्ति एते..।' इति निराशतया तादृशात् कार्यात् विरतः सन् सः पुनरपि कोषकार्ये निमग्नः अभवत् ।

* * *

परन्तु परिस्थितिः तं निर्लिप्ततया स्थातुं न अन्वमन्यत । केचन प्रमुखाः यहूद्यनायकाः चिन्तितवन्तः यत् शासनानुमतिं विनापि आदेशम् उल्लङ्घ्य अपि यदि बाह्यदेशस्थाः अनेकसहस्रसंख्याकाः यहूद्याः स्वमातृभूमिं निवासाय आगच्छन्ति तर्हि एव इस्त्रेल्देशः स्वतन्त्रः भवति इति । तदर्थं ते सर्वेऽपि तथा प्रेरणीयाः यत् ते सर्वं विरोधं सम्मुखीकृत्यापि स्वमातृभूमिम् आगच्छेयुः । तादृशं प्रेरणादायकं निवेदनं किञ्चित् तेषां सविधे करणीयम् । तच्च निवेदनं कः लेखितुम् अर्हति...?

सर्वेषां स्मृतिपथे एकमेव नाम आगतं 'बेन्यहूदः' इति । यतः पूर्वमपि तेन द्विवारं तादृशम् ऐतिहासिकं निवेदनं कृतम् आसीत् । तत् पठित्वा अनेकसहस्रसंख्याकाः यहूद्याः मातृभूमिं प्रत्यागताः आसन् । अतः ते सर्वे

बेन्यहूदस्य गृहमेव आगतवन्तः । निवेदनलेखनाय तं प्रार्थितवन्तः च । परन्तु बेन्यहूदः अधुना तादृशस्य लेखनस्य स्थितौ नासीत् । तदेव सः तान् उक्तवान् । परन्तु ते तत् नानुमतवन्तः । "वयं सम्यक् जानीमः यत् भवतः लेखन्याः एव तादृशी शक्तिः अस्ति । एतावतां वर्षाणाम् अनन्तरम् अपि भवदीयं पूर्वतनं निवेदनद्वयमपि अस्माकं कर्णयोः गुञ्जति । अधुनापि भवता एव एतत् लेखनीयम् । भवदीयां पूर्णां प्रतिभां तपः च विनियुज्य तादृशं निवेदनं लिखतु, यत् पठित्वा विदेशस्य कोणे स्थिताः अपि यहूद्यबान्धवाः सर्वं परित्यज्य मातृभूमिम् आगच्छेयुः" इति उक्त्वा उत्तरदायित्वं तस्य शिरसि एव आरोपितवन्तः ।

अन्ते च बेन्यहूदः तेषां प्रमुखम् उद्दिश्य उक्तवान् – "मम भासते यत् इदानीम् अहं तादृशं निवेदनं कर्तुं न शक्नोमि इति । तथापि भवान् अस्ति अस्माकं नायकः । भवदीया अपेक्षा मम तु आज्ञा एव । भवदीयाम् आज्ञां शिरसा वहामि" इति । ते सर्वे सन्तृप्त्या ततः निर्गताः ।

तस्यां रात्रौ सुदीर्घकालं यावत् बेन्यहूदः स्वीये अध्ययनप्रकोष्ठे जागरितः एव आसीत् । हेम्डा बहिः उपविश्य तं प्रतीक्षमाणा आसीत् । रात्रौ द्विवादनसमये लेखनीम् अधः संस्थाप्य बहिः आगतः सः पत्न्याः मुखं दृष्ट्वा निराशतया उक्तवान् – "प्रिये ! भासते यत् अहं तत् लेखितुं नैव शक्नोमि । अधुना तु नितरां श्रान्तः अस्मि । न स्फुरन्ति वाक्यानि, न वा शब्दाः । प्रायः इदानीं विश्रान्तिः एव शरणम् !"

हेम्डा ज्ञातवती यत् तेन तावत्पर्यन्तं केवलं पञ्च पङ्क्तयः एव लिखिताः आसन् । "अस्तु प्रिय ! श्वः लिखतु" इति वदन्ती सा तस्य शय्यां सज्जीकृतवती । परेद्यवि यदा सा जागरिता तदा बेन्यहूदः पुनः अध्ययनप्रकोष्ठं गतः आसीत् । तेन पुनः पञ्च पङ्क्तयः लिखिताः आसन् । तत्पश्चात् घण्टाद्वयम् अतीतं चेदपि सः किमपि लेखितुं न शक्तः । पत्न्या विश्रान्तिस्वीकरणाय पुनः पुनः प्रार्थितः अपि सः तत् अशृण्वन् लेखितुं यत्नम् अकोरत् । परन्तु असफलः जातः ।

अतीतं चेदपि सः किमपि लेखितुं न शक्तः। पत्न्या विश्रान्तिस्वीकरणाय पुनः पुनः प्रार्थितः अपि सः तत् अश्रृण्वन् लेखितुं यत्नम् अकोरत्। परन्तु असफलः जातः।

तद्दिने किञ्चन पर्व आसीत्। गृहे बान्धवाः सम्मिलिताः आसन्। मध्याह्ने रात्रौ च गृहे बन्धूनां कलकलः आसीत्। रात्रौ तन्मध्ये एव "क्षन्तव्यं, मम अनिवार्यं किञ्चित् कार्यम् अस्ति" इति उक्त्वा तेषां बन्धूनां क्षमां सम्प्रार्थ्य बेन्यहूदः अध्ययनप्रकोष्ठं प्रविष्टवान्। एकादशवादने हेम्डा तस्मै चायं दत्तवती। मध्यरात्रे सर्वेऽपि बान्धवाः प्रतिनिवृत्ताः। हेम्डा शनैः पत्युः अध्ययनप्रकोष्ठं प्रविश्य दृष्टवती। अधुनापि बेन्यहूदः लेखनीं गृहीत्वा लेखनपीठस्य पुरतः तथैव स्थितः आसीत्। तस्य मुखे महती अशान्तिः..। काचित् व्यग्रता...।

"प्रिय! अद्य पर्याप्तम्। श्वः लिखतु। नितरां श्रान्तः अस्ति भवान्" इति प्रेम्णा शिशुमिव वदन्ती हेम्डा तस्य हस्तात् लेखनीं स्वीकृत्य पार्श्वे स्थापितवती। तस्य मुखात् निर्गतम् – "प्रिये! नाहं लेखितुं प्रभवामि तृतीयं निवेदनम्...।"

हेम्डा किमपि अनुक्त्वा हस्तावलम्बनं दत्त्वा तं शय्यासमीपं नीतवती। श्रान्तं शिशुमिव तं शाययित्वा तदुपरि आच्छादकं प्रसारितवती। सः नेत्रे न्यमीलयत्। हेम्डा अध्ययनप्रकोष्ठं गत्वा दृष्टवती। अधुनापि दश पङ्क्तयः एव तेन लिखिताः सन्ति!

प्रायः घण्टानन्तरं बेनयहूदः क्षीणस्वरेण पत्नीम् आहूतवान्। झटिति तत्र धावितवती हेम्डा।

"प्रिये! काञ्चित् बाधाम् अनुभवामि। श्वसितुं कष्टम् अनुभवामि।"

तस्य कण्ठः अतीव दुर्बलः आसीत्। हेम्डा झटिति पुत्रीपुत्रान् उत्थापितवती। बेन्झियोनः समीपे एव निवसति स्म। सोऽपि आगतः। झटिति वैद्याः आनीताः। एकस्य अनन्तरम् अपरः चेति पञ्च वैद्याः समागताः। आपत्काले उपयुज्यमानः प्राणवायुकोषः अपि चिकित्सालयात् आनीतः। कृत्रिमविधानेन श्वासोच्छ्वासाय अपि प्रयासः कृतः। तावता

इच्छति भवान् ?'' इति ।

''न हि''– इति अस्पष्टतया वदन् सः शिरः चालितवान् । क्षणानन्तरं सा पृष्टवती – ''अपि इदानीं किञ्चित् हितम् अनुभवति प्रिय...?''

''आं प्रिये !'' – अन्तिमं वचनम् उक्तवतः तस्य नेत्रे निमीलिते अभवताम् । वैद्येषु अन्यतमः आच्छादकेन तस्य मुखं पिहितं कृतवान् !

* * *

त्रिंशत्सहस्रजनाः शवयात्रायां भागं गृह्णन्तः श्मशानं प्रति बेन्यहूदस्य शवम् अनुसृतवन्तः । विद्यालयबालाः अपि शोकसूचकं कृष्णवर्णं ध्वजं गृहीत्वा शवयात्रायां भागम् अवहन् । सुदूरस्थानेभ्यः अपि आगताः तदभिमानिनः तत्र सम्मिलिताः । आलिव्स्पर्वतस्य उपरि तस्मिन् स्थाने, यत्र उपविश्य बेन्यहूदः स्वभाषायाः स्वदेशस्य च पुनर्निर्माणस्य स्वप्नान् पश्यति स्म, स्वस्य प्रियतमं जेरूसलेंनगरं सर्वदा विहङ्गमदृष्ट्या पश्यति स्म तत्र सर्वेषां सम्मुखे तस्य शरीरस्य निखननं कृतम् । यहूद्यानां सम्प्रदायानुसारं हेम्डा वा परिवारस्य अन्ये सदस्याः वा तत्र आगन्तुं नानुमताः आसन् । शासनेन दिनत्रयात्मकं राष्ट्रियं शोकाचरणं घोषितम् ।

* * *

१९२२तमे क्रिस्ताब्दे प्रवृत्तात् स्वस्य मरणात् पूर्वं बेन्यहूदेन बाल्यात् आरभ्य दृष्टः कश्चन अद्भुतः स्वप्नः – द्विसहस्रवर्षेभ्यः व्यवहारपथात् दूरं गतायाः हीब्रूभाषायाः व्यवहारपथे पुनरानयनम् – इत्येषः पूर्णतया साकारतां गतः आसीत् । यद्यपि तदानीमपि देशस्य स्वातन्त्र्यं न प्राप्तम् आसीत् तथापि हीब्रूभाषा तु पर्याप्तमात्रेण व्यवहारपथम् आगता आसीत् । शिक्षणस्य यथा तथा वाणिज्यस्य क्रीडायाः सर्वविधसामाजिकव्यवहारस्य च भाषारूपेण सा विकसिता आसीत् । तत्रापि 'सद्यः एव म्रियते' इति वैद्यैः स्पष्टं सूचितः अपि सः तत्पश्चादेव जीवने तादृशीम् असाधारणीं सिद्धिं प्राप्तवान् आसीत् । एतेन कोषकार्ये असमाप्तेऽपि सः सन्तृप्त्या एव अन्तिमं श्वासं श्वसितवान् स्यात् । एतादृशं भाग्यं कतिभिः वा प्राप्तुं शक्येत.....!

* * *

संस्कृतानुरागिणः संस्कृतप्रचारकार्ये निरताः तस्य प्रसारणार्थं रात्रिन्दिवं यतमानाः च 'भुवमानीता भगवद्भाषा'नामकस्य कथानकस्य पठनेन यादृशं विश्वासं, प्रोत्साहनं स्फूर्तिं च लभेरन् तादृशं न अन्येन इति मम मतिः । वाचकानां मनसि संस्कृतप्रसारविषये भावजागरणे तत्कार्ये सहभागं वोढुं तेषां मनसि इच्छाजनने च समर्थतमं कथानकं नान्यत् किमपि भवितुम् अर्हति, एतस्मात् । आदर्शभूतः अविचलितमनाः निष्ठावान् कथानायकः, प्रसङ्गोपयोग्या हृदयङ्गमा कथा, सुन्दरं संस्कृतीकरणं च - एते अंशाः अस्य कथानकस्य भूषणानि सन्ति ।

*- कश्चन वाचकः*

मूल्यं - रू. ३०.००

ISBN 81-88220-47-7

संस्कृतभारती
बेङ्गलूरु